॥ श्रीगुरु शरणम् ॥

# भारतीय-राजनीति-प्रकाशः ।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वर ।
गुरु साक्षात् परब्रह्म तस्मै श्रीगुरवे नम. ॥

भारतीय-पाश्चात्य-राजनीत्यो परस्पर तुलनात्मक-दृष्ट्या विचारे क्रियमाणे इदमेव स्पष्ट प्रतीयते, यत् पाश्चात्य-नीतिज्ञाना विचारसरणे अपेक्षया भारतीय-नीतिज्ञाना विचार-पद्धति सर्वप्रकारेण अत्यन्त श्रेष्ठा सर्वाङ्गीणतया पूर्णतमा चेति । अयमेव विचारोऽस्मिन् ग्रन्थे विशेषत प्रस्तुतो वर्तते ।

प्रत्यभिनिवेश त्यक्त्वा अस्मिन् विषये यदि भारतीय-विचार-शैल्या अनुसरण क्रियेत तर्हि इदमप्यवश्य प्रतीयेत, यद् भारतीय-राजनीतौ न केवल पाश्चात्य-राजनीते समन्वयोऽस्ति, किन्तु तत्र या या न्यूनता विद्यन्ते तासा सर्वासाम् अपि विचार पुरस्कृत्यैव तन्निवारणोपाया अपि सम्यक् निर्दिष्टा इति ।

तत्र तावन्नीतिस्वरूपज्ञानमेव प्रथमत आवश्यक येन भारतीयाना पाश्चात्याना च विचारपद्धत्यो को विशेष इति पाश्चात्याभीष्टानामपि फलाना सिद्धि कया रीत्या अवश्य भवितुमर्हतीति च ज्ञायेत ।

नीतेर्लक्षणमिदमेव वर्णित कामन्दकीय-नीतिसारटीकायामुपाध्याय-निरपेक्षायाम् यत् —

" प्रत्यक्षपरोक्षानुमानलक्षण-प्रमाण त्रय-निर्णीतायां
फलसिद्धौ देश-कालानुकूल्ये सति यथासाध्यमुपाय-
साधना विनियोग-लक्षणा क्रिया नीति." इति ।

लक्षणमिदमतीव दूरदर्शिता-सूचकमित्यत्र न कस्यापि वैमत्य भवितुम् अर्हति । केवल शब्द-प्रामाण्यमनुसृत्य क्रियमाणमनुष्ठान धर्म-शब्द-वाच्य भवति । तदेवानुष्ठान यदा प्रत्यक्षानुमानाभ्यामपि हित-साधनता निश्चित्य क्रियते तदा नीतिसंज्ञा प्राप्नोति । अतो नीतिर्न धर्मान्तरा अवस्थिति लभते । प्रत्यक्ष-तर्काभ्यामपि यस्या नीतौ हित-

साधनता निश्चिता, तस्या संदेहादि-मूलकम् अननुष्ठानं तु अवश्यं विपत्ते कारणं भवति ।

उक्त-लक्षणस्य तात्पर्यमिदमेव, यत् नीतौ पूर्वोक्त-प्रमाण-त्रय-समन्वये सत्येव सा चार्वाक-बौद्धास्तिकादि-सर्वसम्मता भवितुमर्हति नान्यथेति स तथावश्यक इति ।

## अदृष्टस्य प्रत्यक्ष-विषयत्वम्

अत्रैतादृश-भारतीय-राजनीति-सम्मतस्य अदृष्टस्य प्रत्यक्ष-विषयत्वं कथमिति प्रश्न समुपतिष्ठते । तत्रेदमेवोत्तरम् -- यद् अदृश्यानामपि पदार्थानामवस्थाविशेषेण प्रत्यक्षत्वं सम्भवतीति । एवमेव प्रतिपादितं वेदान्तसूत्र-मुक्तावलि-ग्रन्थे श्रीब्रह्मानन्दसरस्वतीभि **"पञ्चम्यामाहुतावाप पुरुषवचसो भवन्ति"** इति श्रुतिसंबद्धानां **"तदन्तर-प्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्न-निरूपणाभ्याम्"** इत्यादिसूत्राणां व्याख्यानावसरे । **"अग्निहोत्रादिषु शुचितापूर्वकं प्रदत्ता पयआदिरूपा आहुतयो भूतसूक्ष्मरूपेण परिणता एवादृष्टरूपा सत्यो धूमादिमार्गेण सूर्यमण्डलं गत्वा सूर्यस्येन्धनकार्यं कुर्वन्ति । ततो वृष्टिरूपेण पृथिवीं प्राप्यान्नादिरूपेण परिणतास्ता एवादृष्टरूपा आहुतयः पुरुषशरीरं प्रविश्य रस-रक्तादि-धातु-रूपेण परिणता सत्यस्ततः स्त्रिया उदरं प्राप्य गर्भरूपतां गच्छन्ति ।"** इति । अतस्तेन रूपेणादृष्टस्यापि दृश्यत्वं भवतीति नीति-लक्षणे न कोऽपि दोष । एतदेवोक्तं भगवता गीतायामपि --

**"तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्"** इति ।

अतो यदि नूतन-प्रजासु धारणा-मेधा-बल-पुष्ट्यादि-गुणानां संग्रहोऽभीष्टस्तर्हि संस्कारादि-द्वारा आहुतीनां शुचिता अवश्यं संरक्षणीया भवेत् ।

शरीरादिरूपेण दृश्यमानस्य अदृष्टस्य सूक्ष्मरूपमीश्वर-प्रसाद एव यस्य च मायेश्वरेच्छा प्रकृतिरित्यपरं नाम । परमेश्वरस्यानेकविधास्विच्छासु **"अमुक इदं कुर्यादिदं न कुर्यात्"** इत्याकारकेच्छाया एव **"शाब्दीभावना"** इति संज्ञा मीमांसकानाम् । तस्या बोधो वेद-गत-विधि-

निषेध-वाक्येभ्यो भवति, तत्र तादृश-शाब्दी-भावनया स्वज्ञानाधीनेष्ट-साधनत्वानुमिति-प्रयोज्यत्व-सम्बन्धेन आम्नातार्थकृतानन्वय इति तत-सिद्धान्त। अतो मीमांसकाना पूर्वोक्त-नीति-लक्षणस्य समन्वयोऽपि धर्मे इष्ट। अथ भाव यदि विधि-वाक्येभ्य शाब्दी-भावनामवगत्य अनन्तर तद्विषयत्वेन हेतुना इष्टसाधनत्वमनुमायैव यागादिषु प्रवृत्तिर्भवेत्तर्हि सा धर्मजनिका भवति, इत्येव प्रमाण-त्रयस्यापि समन्वयस्तत्रापेक्षित इति।

## नीति-समन्वित-धर्मानुष्ठान सर्वसंतोषकारकम्

एतादृश-नीति-समन्वित-धर्मानुष्ठानमवश्य सर्वेषा चित्त-संतोषावह भवतीत्यत्र नास्ति संशय-लेशोऽपि। अत एव —

**यान्ति न्याय-प्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।**
**अपन्थान तु गच्छन्त सोदरोऽपि विमुञ्चति॥**

— इत्यनुभवमूलिका कव्युक्तिरपि सगच्छते।

अधुना प्रमाणत्रय-समन्वितायामेव नीतौ न कस्यापि विरोधो भवितुमर्हतीत्ययमशो विमृश्यते।

साप्रत मानव-समाजे यद्यप्यनेके वर्गा समुपलभ्यन्ते तथापि तेषा विशेषतो वर्ग-द्वय एवान्तर्भाव। तत्रैक शब्द-प्रामाण्यवादी केवल-प्रत्यक्षानुमान-प्रामाण्य-वादी चापरो वर्ग। एतादृश वर्ग-द्वयमिदानीमेव समत्पन्नम् इति तु न, किन्तु सृष्टिकालात प्रभृत्येवासीदिति समुपलभ्यते। उक्तवर्ग-द्वयस्यापि स्वस्वशक्त्यनुसारेण देशहित-साधन-दृष्ट्यैव सदा प्रयत्न प्रचलति। तथा प्रजाना धर्मार्थ-काम-रूप त्रि-वर्ग-समृद्धिरेव लक्ष्यीभूता सर्वेषाम्। तत्र यदि प्रमाण त्रय-सिद्ध-कर्मानुष्ठानेनैवोक्त-लक्ष्य-सिद्धे-रवश्यभाव सिध्येत् तर्हि तस्य सर्वमान्यताया न विवादो भवितुमर्हति। अत एव केवल-प्रत्यक्ष-प्रामाण्यवादिना चार्वाकेणापि "**नीति-कामशास्त्रानुसारेण वर्तन धर्म।**" इति पूर्वोक्त-नीतेरनुसरण कृतम्।

एवमनुमान-प्रामाण्य-वादिनो बौद्धा अपि वाग्भटादि-वैद्यक-ग्रन्थेषु "**वर्णाश्रम-व्यवस्था षोडश-सस्कारास्त्वर्थ-काम-समृद्धे कारणीभूता।**"

इति स्पष्टमुद्घोषयन्ति। यथा भारतीय-राजनीते अनुसरणम् उक्त-वर्ग-द्वयेनापि कृत तथैव यदि साहित्य-शास्त्र-दृष्ट्या अभिनय-पूर्वक तस्या अनुसरण क्रियेत तर्हि पश्वादिभिरपि तादृश-नीति-युक्त-नायकानुगमने आनन्दोऽनुभूयेतेति श्रीरामचन्द्र-चरित्र-दर्शनेन सिध्यति । तेषु तेषु समाजवाद-साम्राज्यवादादिषु दोषमुद्भाव्य ईश्वर-स्वत्व-वाद एव सर्वथा योग्य समाजे शान्ति-व्यवस्थापकश्च भवितुमर्हति इत्येतस्मिन् पक्ष स्वीक्रियमाणे —

**सप्त वित्तागमा धर्म्या दायो लाभ क्रयो जय. ।**
**प्रयोग कर्मयोगश्च सत्प्रतिग्रह एव च ॥**

इत्यादि-स्मृत्यादि-वचन-पर्यालोचनया शास्त्रीयोपायै व्यक्तिषु स्वत्व-मुत्पद्यत एवेति कथमीश्वर-स्वत्व-वादस्य शास्त्र-समनत्व भवितुमर्हति

## प्राप्तस्य सर्वेभ्यः विभज्य दानम् एव योग्यम्

इति प्रश्नो यद्यप्युपस्थापयिष्यते कैश्चित् तथापि श्रीमद्भागवते सप्तमे स्कन्धे नवमाध्याये एवमुक्तमस्ति—

**यावद् भ्रियेत जठर तावत् स्वत्व हि देहिनाम् ।**
**अधिक योऽभिमन्येत स स्तेनो दण्डमर्हति ॥**

**मृगोष्ट्रखरमर्काखुसरीसृप् खग-मक्षिका ।**
**आत्मन पुत्रवत् पश्येत्तैरेषामन्तर कियत् ॥**

तट्टीकाया श्रीधरस्वामिन दैवाद्भूरिलाभे जातेऽपि तत्राभिमानो न कार्य इत्याह यावदिति। भ्रियेत-पूर्येत, अत एवान्य कमपि स्वगृह क्षेत्र वा प्रविश्य भुञ्जान न निवारयेदित्याह-मृगेति । मर्को मर्कट अतिकृच्छ्रेणा-पाद्य न भजेत् किन्तु यावद्दैव-प्रापित तावदेव भजेत् श्वान-पतिता, अन्ते-वसायिनश्चाण्डालादय तानभिव्याप्य श्रीमद्भगवद्गीतायामपि—

**देवान् भावयतानेन ते देवा भावयन्तु व ।**
**परस्पर भावयन्त: श्रेय परमवाप्स्यथ ॥**

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥

(भ गी ३-३१।१२)

श्रीमदुदयनाचार्या अपि–

स्वाम्य यस्य निज जगत्सु जनितेष्वादौ तत पालनम्
व्युत्पत्ते करण हिताहितविधिव्यासेधसभावनम् ।
भूतोक्ति सहजा कृपा निरुपधिर्यस्तस्तदर्थात्मक
तस्मै पूर्णगुणात्मय जगतामीशाय नित्ये नम ॥

यथार्हं-कामान् सविभजेत् स्वभोग्याद् विभज्य दद्यात् । एव च नेश्वरो वञ्चिकृत स्याद् इत्याह जह्यादिति । एतेषा वचनाना पर्यालोचने

* * * * * * * * * * * * * * * * * * * * * * * * * * *

## सर्वहितोपदेशिनी भारतीया राजनीतिः

* * * * * * * * * * * * * * * * * * * * * * * * * * *

एतदेव सिध्यति यत् तेषा स्वत्वोपायाना शास्त्रेण प्रतिपादितत्वेऽपि तद्द्वारा प्राप्तस्य सर्वेभ्यो विभज्य दानमेव योग्यम् । तेनैव च ईश्वरस्य प्रसाद नान्यथा इत्येतत्तत्त्वमेतस्य वादस्येति न शास्त्रेण सह विरोधोऽपि ।

न्यायेनार्जनमर्थस्य रक्षण वर्धन तथा ।
सत्पात्रप्रतिपत्तिश्च राजवृत्त चतुर्विधम् ॥

इति नीतिसारेणापि सत्पात्रप्रतिपत्तिर्विहिता उक्ताभिप्रायपरिपोषिका भारतीयराजनीतिर्भवति ।

स्पष्टीकृता चेयमुपाध्यायनिरपेक्षायाम ।

एव रीत्या सर्ववर्गाभिमत-प्रमाणत्रय-समन्वय-पूर्वक भारतीय-राजनीति सर्वेषा हितम् उपदिशति । यस्या प्राशस्त्य वेदेऽपि वर्णितम् —

"तस्य श्रद्धैव शिर, ऋत दक्षिण पक्ष, सत्यम् उत्तर पक्ष, योग आत्मा, महः पुच्छ प्रतिष्ठा तदप्येष श्लोको भवति ।" इति (तै उप )

अत्र प्रमाणत्रय-सिद्धज्ञानस्य विज्ञानपद-वाच्यस्य गरुडरूपेण वर्णनं कृतमस्ति । शास्त्राचार्योपदिष्ट-वाक्यविदमित्थमेवेत्यवधारणात्मिका श्रद्धा तस्य शिर, प्रत्यक्षानुमान-रूप सत्य, शब्दप्रमाणरूपमृत चेति तस्य पक्षद्वयम् । एतत्त्रय-समन्वयपूर्वक चित्तवृत्ते स्थिरता-सपादनरूपो योगस्तस्यात्मेति । अय भाव एतादृशसत्वतो केनापि कारणेन सबन्ध-विच्छेदे सति विज्ञानस्य सत्त्वम् असत्वेन तुल्य स्यात् । किं च नीतेरभावे लोके सर्वत्र कर्तव्यपरस्वामावादशान्तिर्भवेदिति । अत एव " सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ।" इति भारतीयराजनीतौ आचार्य-कामन्दकस्य कथन यथार्थमेव । " सत्य त्वतेन परिषिञ्चामि " इति मन्त्रस्यापीदमेव तात्पर्यम् ।

वेदादिना प्रशसिताया नीतेर्ज्ञानमस्माक यद्यपि भारतीय-राजनीति-शास्त्रादिवाधात पाश्चात्यनीतिशास्त्रादपि भवितुमर्हति तथापि वेदानुयायिना भारतीयाना कृतेऽयमेव सिद्धान्तो यद्-अस्माभिर्भारतीयनीति-शास्त्रानुसारेणैव स्वदेशनीतेर्निर्धारण कर्तव्यमिति । यतो हि वय विशेषतो नियमविधिना बद्धा स्म, अतस्तादृश-नियमादृष्टसरक्षणमस्माक मुख्यतम कार्यम् । नियमादृष्टविषये मीमासा-प्रसिद्धमुदाहरणम् इदमेव, यद् वेदे तावद् दर्शपूर्णमासेष्टिप्रसङ्गे " व्रीहीनवहन्ति " इति विधि श्रूयते । तस्यार्थ पुरोडाशनिष्पत्त्यर्थ तुषविमोकमवहननेनैव कुर्यान्न तु नखविदलनादिनेति । यतोऽत्र विधीयमानस्यावहननस्य तुषविमोकरूप दृष्टमेव फल नादृष्टम् । दृष्टे सभवति अदृष्ट-फल-कल्पनाया अन्याय्यत्वात् । तुषविमोकस्यान्यथापि सभवे इतर-व्यावृत्ति-फलकावहनन-विधानान्यथानुपपत्त्या नियमादृष्ट तु कल्पनीयम् । अस्यादृष्टमात्र प्रयोजन यदि स्यात्तर्हि सकृदवहननेनापि लक्ष्यसिद्धि स्यादिति । तद्वदेव त्रिवर्गसमृद्धि-रूप दृष्टफलसिद्ध्यर्थम् अस्माभिर्भारतीयनीतिशास्त्रानुसारेणैव व्यवहार कर्तव्य इत्यायाति । एतादृश-नियमपरिपालन दैनदिनव्यवहारेऽपि " दक्षिण-हस्तेनैव भोजन कार्य वामत एव गमनम् " इत्यादिरूपेण दृश्यते । पूर्वोक्त-दृष्टान्ते यद्यवहननानन्तरम् अपि कस्यचिद् व्रीहेस्तुषविमोको न जात अवहननमप्यशक्य तदा यथा नखविदलनादीनाम् उपयोग कर्तुं शक्य, तथैव यदि भारतीयनीतिशास्त्राणीतिनिर्धारणस्य सर्वथा असभवस्तदा

अन्यशास्त्रानुसारेण प्रवर्तनेऽपि नियमोल्लङ्घन-जन्य-दोषो न स्यात् । भारतीयराजनीतौ सर्वत्र प्रमाणत्रयसमन्वितमेवानुष्ठानं विधीयते इति विशेष ।

तत्र येषां प्रश्नानां समाधानं पाश्चात्त्य राजनीत्यनुसारेणाद्यापि न जातं, तेषामेव विचारा क्रमेणात्र करिष्यन्ते । तेष्वन्यतम —"**परराष्ट्रेण सह जायमानस्य सन्धे स्थिरता कथं भवेद् इति प्रश्न** । तद्विषये भारतीय-राजनीते यद् वैशिष्ट्यं तदमुना प्रतिपाद्यते ।

भारतीय-राजनीति-शास्त्रं मुख्यतो भागद्वयं वर्तते । तत्र क्रमेण स्वराष्ट्र-परराष्ट्रसम्बन्धिनो विचारा प्रवृत्ता । कामन्दकीय-नीतिसारे तावद् द्वितीय-सर्गत सप्तमसर्गान्त प्रथमो विषय, ततः आन्त द्वितीय-विषयश्च प्रतिपादित । सोऽयं सन्धिविचारस्तत्र द्वितीयभागे आयाति ।

* * * * * * * * * * * * * * * * * * * * * * * * *

## परराष्ट्रेण जायमानस्य संधेः स्थिरता ।

* * * * * * * * * * * * * * * * * * * * * * * * *

परराष्ट्रेण सह प्रत्येकराज्यस्य कथं व्यवहारोऽपेक्षित इति भारतीय-पाश्चात्त्य-राजनीतिशास्त्रयोरुभयत्रापि महान् विचारो वर्तते । तदर्थं सन्धि-विग्रह-यानासन-द्वैधीभाव-समाश्रय-रूप षाड्गुण्यं निर्दिष्टम् । तत्र सन्धिरेव प्रधानतम । तदर्थमेव च अन्येषां गुणानामावश्यकता । सन्धिम् उपेक्ष्य विग्रहद्वारा प्रजा-पशु धन-कोशादीनां क्षयस्तु न कस्यापि विचारशीलस्य राष्ट्रस्य सम्मतो भवितुमर्हति । एवं तर्हि सर्वेषाम् अभीष्ट-तमा शान्तिरपि सन्धि-तदर्थ एव । अत एवाचार्यचाणक्येन "**शम समाधि सन्धिरिति पर्याय** " इत्यर्थशास्त्रे शम-पर्यायत्वं सन्धे प्रतिपादितम् । तत्तच्छास्त्रीय-पारिभाषिकशब्दानामर्थनिर्णयस्तु तत्तद्-व्याख्यानुसारेणैव कर्तुमुचितं । "**राज्ञा विश्वासोपगम सन्धि । अयं मद्विष्टं साधयिष्यत्येवेत्याकारक-निश्चयो विश्वास ।**" —इति हि तद्व्याख्याकृद्भिर्वर्णितम् । एतादृशो विश्वासो यदि स्थिरतया यावज्जीवमग्रेऽपि वंश-परम्परया च स्थास्यति, तदा स्थिरसन्धिरित्युच्यते । एतदर्थमेव नीतौ शब्दप्रमाणस्यापि समन्वय इष्ट । तात्कालिको विश्वासस्तु कारण-विशेषाद् विनष्ट सन् परस्पर-युद्धादिपरिस्थितिमवश्यमातनोति । यथा

च जनताया सुखं स्वप्नायमानं स्यात् । अस्योदाहरणम् इदानीं प्रत्यक्षतः सर्वत्र दृश्यते । स्थिरविश्वासस्याभावादेव हि राष्ट्रं सामाजिक-सुख-शान्त्यादिभिर्वञ्चितमस्ति ।

राष्ट्रयोर्द्वयोर्यत्र पूर्वोक्तविश्वासः स्थिरो भवति, तयोः परस्परं मित्रत्वेन व्यवहारः साहजिकं परिणामस्तस्य । दास्यभाव एव एतादृश-मित्रतायाः प्राणा इति, ईश्वरभक्तिपरम्परया अवगाहनेन सिध्यति । तथा हि —

" श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ "

— इति श्रीमद्-भागवते नव-विधा भक्तिर्वर्णिता । तत्र उत्तरोत्तरभक्तेः पूर्वपूर्वभक्तिः कारणम् । अतो दास्यमेव सख्यस्य कारणम् इति सर्वेषां भगवद्भक्तानां सिद्धान्तः । सख्यभक्तेश्च परस्परं विश्वास एव स्थायि-भावः । दास्यं नाम स्वामिशेषत्वम् । अयं भावः – यस्य हृदये स्वविषये तादृश-विश्वासः समुत्पादनीयस्तं प्रति सेवा-दृष्ट्या-मनो-वाक्-काय-कर्मभिः प्राणानामपि समर्पणमिति । अङ्गाङ्गिभाव एव स्वामि-सेवकयो-रन्योन्यं सम्बन्धो भवति, अतः उक्त दास्यभाव-युक्तस्य सेवकस्य योगक्षेम-चिन्ता अपि स्वामिनः कर्तव्यकोटावायाति । अत एव भगवता श्रीकृष्णेन—

" अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ "

इत्युक्तं गीतायाम् ।

अत्र " अनन्या: " इति पदं पूर्वोक्तदास्यवाचकम् । द्रौपदीवस्त्रहरणप्रसङ्ग अत्रोदाहरणम् । द्रौपद्या हृदये स्वपतिषु समासत्सु च " एते मां सरक्षेयु " इति विश्वासो यावदासीत्तावद् भगवता श्रीकृष्णेन तत्संरक्षणे न कोऽपि प्रयत्नः कृतः । यदा सापत्यादीनां स्वसंरक्षणे असामर्थ्यं ज्ञात्वा, अनन्य-भावेन श्रीकृष्णमेव शरणं गता, तदैव भगवान् वस्त्ररूपेणागत्य तस्या मर्यादा-संरक्षणं कृतवानिति ।

एवं रीत्या परमेश्वरः एव मम हितं साधयतीति बुद्ध्या यथा यथा तत्र विश्वासः स्थिरो भवेत्तथा तथा सख्य-भक्तेरपि स्थिरतया क्रमेणे-श्वरसारूप्यं प्राप्य भक्तो मुक्तो भवति ।

अयमेव क्रम पूर्वोक्त-सन्धिविषये ज्ञेय । अर्थाद् ययो परस्पर सख्यमभीष्ट तयोरेकेनापरस्य परस्पर वा सेवा अवश्य विधेया भवेत् । सेवाद्वारा परमात्मन सख्यप्राप्तिस्त्वतीव सुलभा । किन्तु ययो राज्ञो सन्धि कर्तव्यस्तयोरेक स्वार्थित्वेन अनधिकारी चेत्तत्र जायमान सन्धि स्थिरतया स्थास्यतीति न विश्वास कर्तुं शक्य । अत एवेदानीं यावत् पाश्चात्यसमाज अस्य प्रश्नस्य समाधानम् अशक्यप्राय जातम् । भारतीय-नीतिज्ञै तु अस्या समस्याया सम्यगुत्तर कृतम् इति तद्ग्रन्थतोऽवगम्यते । तथाहि सन्धिस्तावद्द्विविध , चलसन्धि स्थिरसन्धिश्चेति । तत्र येन सन्धिना जात सख्यम् अल्पकालावधिकमेव भवति, स चलसन्धि । एतस्योदाहरण तु द्वितीयमहायुद्धपूर्वं रूस्-जर्मन्देशयोर्जात सन्धि साम्प्रत सर्वदा जायमानो भारत-पाकिस्तानयो सूक्ष्म कलहोऽपि चलसधे परिणाम एव ।

* * * * * * * * * * * * * * * * * * * * * * * * *

## पूर्वे राजानः सत्येन संदधिरे ।

* * * * * * * * * * * * * * * * * * * * * * * * *

एव मिस्र-देशेन "सुवेझ्"-जलमार्गस्य ( कॅनॉल ) राष्ट्रीकरणद्वारा य आङ्ग्लदेशेन सह पूर्वकृतस्य सधेरुच्छेद कृत सोऽपि चलसधेरेव परिणाम, एतद्विपरीतस्य स्थिरसधेरुदाहरण च श्रीरामचन्द्र-सुग्रीवयो सधि । अग्निसाक्षिक कृतस्य तस्य पालनम् उभाभ्या यावज्जीव कृतमासीत् ।

एतादृश-स्थिरसधेरधिकारिण के वा भवितुमर्हन्तीत्यस्मिन् विषये आचार्यचाणक्येनार्थशास्त्रे एव प्रतिपादितमस्ति ।

**"सत्य शपथो वा चलसधि प्रतिभू प्रतिग्रहो वा स्थावरसधि इत्याचार्या", नेति कौटिल्य", सत्य शपथो वा परत्र इह च स्थावरसधि, इहैव प्रतिभू" प्रतिग्रहो वा बलापेक्ष सहिताः स्म इति पूर्वे राजान; सत्येन सदधिरे"** इति । (कौ अ ७-१७)

**अस्यार्थ.** — केषाचन अर्थशास्त्राचार्याणाम् इद मत, यद् ययो राष्ट्रयो सन्धिरभीष्टस्तयो अन्योन्यम् अत्यन्तोपयोगिवस्तुनो राष्ट्र-प्रधान-पुरुषस्य वा एकेन अपरस्य स्वायत्तीकरण प्रतिग्रह-पद-वाच्य, सयुक्तराष्ट्रसघ-सदृशस्य अपराधिने दण्डदान-समर्थस्य मध्यस्थस्य समक्ष

क्रियमाण सन्धिश्च तत्स्थिरताया प्रयोजकम्। अन्यथा केवल सत्यशपथाभ्यां सपन्न सन्धि न स्थिरो भवितुमर्हतीति, प्रायोऽयमेव विचार पाश्चात्यनीतिज्ञानाम् अपि। पर चाणक्येन तन्मतमपि सगृह्य स्थिरसन्ध्यर्थं सत्य-शपथयो अपि आवश्यकता प्रतिपादिता। इदमेव पूर्वोक्तप्रश्नस्य उत्तर भारतीय-दृष्ट्या। एतावता आचार्य-चाणक्यस्य अभिप्राय न स्पष्टो भवति इत्ययमेव विषयो विस्तरेण प्रस्तूयते।

अपरेण सह सध्यर्थं राजा राष्ट्र वा कस्मिन्नप्यंशे स्वस्मिन्न्यूनताम् अवगम्यैव प्रवृत्त भवति। प्रभुमन्त्रोत्साह-शक्तीना बल पूर्णतया स्वस्मिन् यदि स्यात्तर्हि सन्धिप्रार्थनापूर्वक शत्रुसमय-समर्ति को वा कुर्यात्? अत. परिस्थितिवशात्समुत्पन्नया स्वशक्तिन्यूनतया आगताया विपत्त परिहार शनै. शनैर्बलसवर्धन च सधर्मुख्य प्रयोजनम्। तदुक्त कामन्दकेन —

"बलिना विगृहीत सन्नृपोऽनन्यप्रतिक्रिय।
आपन्न सन्धिमन्विच्छेत् कुर्वाण कालयापनम्॥"

इति। अत स्वशक्तिपूर्तेरनन्तरम् अवश्यमस्य सर्वविध व्यवहारेषु क्रमेण विनय-परित्याग-पूर्वक परिवर्तन भविष्यत्येव। यतो वीरस्य स्वभाव एवैष। अत प्रतापी राजा स्वीकृतस्य समयस्य यथावत परिपालनम् अवश्य करिष्यत्येवेति विश्वासो न कर्तुं शक्य, प्रत्युत तत्प्रतीकारदृष्ट्या

• • • • • • • • • • • • • • • • • • • • • • • • •

## धर्मेण हीनाः पशुभिः समानाः

• • • • • • • • • • • • • • • • • • • • • • • • •

तेन पूर्वम् अर्पितस्य वस्तुन प्रत्यर्पण, नूतन-समयश्च समुपस्थाप्येत। तदानी तस्य बल ज्ञात्वा अर्पित-वस्तु-दानमनिच्छयाप्यन्यस्य कर्तव्यतया आपतति, अन्यथा युद्ध-प्रसङ्ग स्यादिति। एतादृश्यामवस्थाया मध्यस्थस्यापि तूष्णीभावोऽवश्यभावी। अत केवल प्रतिभू-प्रतिग्रह-द्वारा जायमानस्य सन्धेरस्थिरता निश्चिता एव। नाय नियमोऽप्राकृतिक पश्वादिष्वपि तथा दर्शनात्। अत एव "धर्मेण हीना. पशुभि समाना" इत्युक्तम्।

किंच सन्ध्यधिकारिषु केचनोच्चप्रकृतिका केचन निम्नश्रेणिपतिता अपि भवन्ति । तत्रोच्चप्रकृतिकैः सह पाश्चात्याभिमत-पूर्वोक्त-प्रतिभू-प्रतिग्रह-द्वारा कृत सन्धि परिणामे युद्धप्रसङ्गम् अवश्य समुपस्थापयिष्यति । अत केवल-प्रतिभूप्रतिग्रहो न स्थिरसन्धे प्रयोजको । किंतु उच्च-प्रकृतीना नियन्त्रणार्थम् एव तत्र सत्यशपथयोरप्यावश्यकता अस्तीति ग्रन्थकारस्याभिप्राय । अत स्वराष्ट्रे परराष्ट्रे वा सत्य-शपथयो उपेक्षापूर्वक क्रियमाणोऽपि सन्धिर्न कथमपि शान्ति जनयिष्यति ।

## सत्य-शपथयोः आनिवार्यता

उच्चप्रकृतिकेषु स्थिरसन्ध्यर्थम् अपेक्षितयो सत्यशपथयो अर्थस्तु अर्थशास्त्रे एव वर्णित । "सत्य नाम प्रमाण-प्रसूत परलोक-विश्वास । शपथ च ज्ञानपूर्वक जनताया समक्ष लेखद्वारा वचनद्वारा वा सन्धौ निर्दिष्टाना समयाना स्वीकार " इति । एतयोर्द्वयोरुपेक्षा तु सन्धस्य स्वराष्ट्रस्य स्वस्य च विनाशे हेतुर्भविष्यतीत्यवश्य ज्ञातव्यम् ।

अत्र परलोक-विश्वासम् अन्तरा अवशिष्टत्रयेणापि सन्धे स्थिरता स्वराष्ट्रे परराष्ट्रे वा परस्पर मित्रतया व्यवहारश्च भवितुमर्हति तद्रहितस्यापि शासकपदे स्थापन न शक्यम्, यतो हि शपथातिक्रमे लोकलज्जाजनकतया उच्च-प्रकृतिकाना शपथ-विरुद्धाचरणे प्रवृत्तिरेव न स्यात् । अतो राज्यव्यवहारे तस्य न आवश्यकता इति केषाचिदाक्षेप स्यात् । सोऽयम् आक्षेप तदा एव सबल स्याद् यदि सन्धिकर्तु स्वय स्वीकृताया प्रतिज्ञाया विरुद्धाचरणे तदुपेक्षाकरणे वा लज्जाया अनुभव स्यात् । पर तस्यैव असंभव परलोकभयम अन्तरा । एतावास्तु शपथस्य उपयोगोऽवश्य भवति, यत् उच्च-प्रकृतिकाना तादृशाचरणस्य जनताया प्राकट्ये सति तेषां मुखे रक्तिम-स्थाने श्यामता आयाति । तावता परलोक-विश्वास-रहितेषु प्रतिज्ञाविरुद्धाचरण प्रतिज्ञातोपेक्षा वा न भविष्यत्येवेति वक्तु न शक्यम् । उक्त-संभावनामात्रेण अधुनापि शासक-पदारोहण-समये शपथ-ग्रहणस्य पद्धति स्थापिता वर्तते । सूक्ष्मदृष्ट्या विचार्यमाणे पूर्वोक्तपक्षे महती न्यूनता दृश्यते । यतो हि शासकपदे स्थिते जनताया

स्वविषये विपरीत-भावना मा भूत इति विशेषतोऽवहितैर्भूयते। तत्र जनमनस्यैव यथा यथा परिवर्तन भवेत्तथा तथा तद्व्यवहारस्यापि क्रमेण परिवर्तनेन अवश्य भाव्यम्। तेन च पूर्व-सिद्धान्तस्यैव वैपरीत्यं सति तदनुसारेण कृताया प्रतिज्ञाया विरुद्धाचरणम् अपि लज्जावह न भविष्यति। एतद्विषये उदाहरण तु इदमेव, यद् एकस्मिन समये भारतीय-सम्पनाया चिह्नत्वेन शिखाया माहात्म्यम् अत्र आसीत। अत एव तद्रक्षणार्थं छत्रपति श्रीशिवाजी-गोविन्दसिंह-प्रभृतिभि समराङ्गणं अवनीयं स्व प्राणदानमपि कृतम। तदानी शिखाया अस्थापन नाम भारतीयाना कृते अतीव अपमानकारकम् आसीत्। परम इदानी तस्मिन्नेव भारतवर्षे लोकै स्वेच्छया तत्कृन्तन क्रियत, प्रत्युत तद्रक्षणम् अपि अतीव लज्जावह मवृत्तमिति।

अत सापत्यस्य स्थिरता लोकमत-स्थिरताधीना, सा च मूलसिद्धान्तस्य स्थिरताम अपेक्षते। अन्यथा लोकमतस्य अस्थैर्ये शासकाना स्थिरकर्तव्यपरताया अभावे अधुना प्रतिज्ञाय अपि अग्रे ते अस्माक हित साधयिष्यन्त्येव इति विश्वास कदापि न कर्तुं शक्य। अत सत्ये स्थिरतासपादकेषु चतुर्थ परलोकविश्वास अपि दीर्घदर्शिनया अनर्थपरिहाराय चाणक्येन परिगणित। अत एव प्राचीनेतिहासेषु "सत्यसधा हि राजान।" इति राज्ञा वर्णन तत्र तत्र उपलभ्यमान सगच्छते।

मौभाग्यवशात स्थिरत्वेऽस्यतुर्थ साधनेषु अय परलोक-विश्वास प्रकृत्या निविकल्पेण अस्मासु भारतीयेषु अनादिपरम्परया प्रचल । अद्यापि केषुचिद् भारतीयेषु दृढतया दृश्यते। तस्य कारण तु अपरिवर्तनीय-वैदिक-सिद्धान्तानुसारित्वम् एव। एतादृश-महत्त्वपूर्ण-वैदिकमतानुयायिनः अन्धविश्वासिन इति कथन तु स्वीय-अज्ञताया परिचायकमेव। यतो वैदिक-सिद्धान्तस्य असत्यता विज्ञानतोऽपि न सिध्यति। तत्स्थिरताहेतुभूत-वेद-अपौरुषेयत्व-विषयवास्तवकोस्तु ग्रन्थविस्तरभयादत्र नोच्यन्ते। ते च अत्रैव ग्रन्थे परिशिष्टे द्रष्टव्या।

भारतीय-नीतिशास्त्रज्ञै तर्कत निश्चितस्य भारतीयेतिहासेषु प्रसिद्धस्य च स्थिरसत्ये सम्यग्ज्ञान पाश्चात्त्याना नास्ति इत्यस्य हेतुस्तेषा सिद्धान्ताना सदैव परिवर्तनीयता। अत एव परिस्थितिवशाद् विवशतया

अद्यापि पाश्चात्यैः "भारतम् एव इदानीं स्थिरशान्तेर्मार्गदर्शकं भवेत्" इत्युच्यते । एतादृश-स्थिरसंधिः एव सुवर्णसंधिः सगतसंधिश्च इत्यपरं नाम । तदुक्तं कामन्दकेन—

"सद्भिः सगतसंधिस्तु मैत्रीपूर्व उदाहृतः ।
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ॥"

—इति । (कामन्दकीयनीतिसारे ९ म )

यथा सुवर्णशकलद्वयस्य द्रवतायाम् ऐक्यं भवति तथैव स्थिरसंधिना सबद्धयोः पक्षयोः एकमत्यं, तेन च आजीवनं समभावेन अन्योन्यं सुखदुःखे अनुभूयेते । एवं स्वराष्ट्राभ्यन्तरे अपि राज्ययन्त्र-सचालने अपेक्षितानां सर्वेषाम् अङ्गानाम् एकप्राणता यावन्न भवति, तावत् सुव्यवस्थया राज्य-चक्र-प्रवर्तनं दुःशकम् । अत एव उक्तं कामन्दकेन—

## भारतम् एव स्थिरशान्ति-मार्गदर्शकम्

"परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ।
एकाङ्गेनापि विकलम् एतत् साधु न वर्तते ॥" इति ।

भारतवर्षे आरम्भत एव एतादृशं सामरस्यं गुरु-शिष्ययोः पति-पत्न्योः, राजप्रजयोः स्वामिसेवकयोश्च यथा स्यात् तथा विशेषेण प्रयत्नः प्रचलितः, तत्साफल्यं च व्यवहारे प्राप्तम् आसीद् अतो देशे सर्वत्र शान्तेः साम्राज्यमप्यासीद् इति इतिहासतो ज्ञायते, एतादृशपरिस्थितेश्चित्रणं भवभूतिना कृतमस्ति । तद् यथा—

"अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यत् ।
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत् स्नेहसारे स्थितम् ।
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥" इति ।

उपर्युक्तविवेचनेन एतावत्तु स्पष्टं भवति यत् यथा कस्यचिद् ब्राह्मणस्य स्वरूपसौन्दर्यं ब्रह्मचर्याद्याश्रम-विहितानां कर्तव्यानां यथावत्परिपालनेनैव, न तु जन्ममात्रेण, एवं शब्दप्रमाणमात्रनिर्णेयस्य अपि धर्मस्य प्रत्यक्षानु-

मानाभ्यां हित-साधनता निश्चित्य चित्तसंतोषपूर्वकं नीतिरूपेण अनुष्ठाने एव सर्वेषां रञ्जकत्वम् इति । एतादृश-प्रमाणत्रय-समन्वित-नीतिपथम् आरूढे स्वराष्ट्रे परराष्ट्रे वा स्थितं सह स्थिर-सन्धि कर्तुं शक्य । परमित्य महत्त्वपूर्णाया भारतीय-प्रणाल्या दूरापेतो वर्गस्तु न कदापि स्थिरसंधे पात्र भवितुम् अर्हति । यदि तादृशवर्गेण सह सन्धि क्रियेत तर्हि स्वार्थ-परवश स किं न कुर्यात्? एतद्विषये लोकोक्तिरपीय प्रसिद्धा ।

"मृद्घटवत्सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवद् दुर्भेद्य. सुकरसन्धिश्च ॥" इति ।

एवरीत्या पाश्चात्त्य-नीति-स्थिताया एकस्या न्यूनताया परिहारो भारतीय-नीतिशास्त्र-दृष्ट्या कथ भवितुमर्हतीति सक्षेपेण प्रतिपादितम् ।

इत परम् अन्येषां पाश्चात्त्यनीतौ समुद्भाव्यमाना प्रश्नाना तद्गत-न्यूनताना च विचार, स्थिरसन्धि विषयेऽवशिष्टो विचारश्च क्रमेण करिष्यते ।

तत पूर्वं "राजानम् उद्दिश्य विहिताया नीतेरुपदेश अन्येषां कृते क्रियमाण सम्प्रति प्रति गृहस्थधर्मोपदेश इव व्यर्थो भवेत् । अत एव कामन्दकेनापि आदावेव एवमेव प्रतिपादित नीतिसारे —

"उपार्जने पालने च भूमेर्भूमीश्वर प्रति ।
यत्किञ्चिदुपदेक्ष्यामो राजविद्याविदां मतम् ॥"

इति, 'भूमीश्वर प्रति अन्यस्य तु राजविद्यायाम् अनधिकारात्' इति तद्व्याख्याया जयमङ्गलायाम अपि उक्तमिति स नीतेरुपदेश इतरेषां कृते कथ युक्तो भवेत् ?

किं च तादृशो राजनीतिरूपो व्यवहार सामान्यजनै क्रियमाण कथ शास्त्र-सङ्गत स्यात्? इति प्रश्नयो प्रासङ्गिकयो समाधान मीमांसा-धर्मशास्त्रयो. समन्वयेन क्रियते ।

राज्ञा यावत् सम्यक्प्रजापरिपालन क्रियते, तावत् सामान्यजनाना राजनीतौ उपेक्षा न राज्यव्यवहारेषु बाधिका भवति, किं तु यदा राजा शासनकार्ये अयोग्य प्रजासु अराजकता-दशा वा स्यात् तदानीम् अन्यैरपि

क्रियमाणा राजनीतेरुपेक्षा तु राष्ट्रेण सह सर्वेषां विनाशजनिका, शास्त्राज्ञा-विपरीततया प्रत्यवायजनिका च स्यात्। तदुक्तं महाभारते, "**क्षात्रो धर्मो ह्यादिदेवात् प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः.**" इति। एतद्-वचनस्यापाततो यद्यपि विधिरूपता न प्रतीयते तथापि तात्पर्यं तत्रैवेति निर्णेतुं शक्यम्। तथा हि, सृष्टि-कर्तृ-ब्रह्मणः पूर्वं क्षात्रधर्मः प्रवृत्तः, तत-

## ईश्वर-प्रयत्नारम्भः जगत्परिपालनम् उद्दिश्यैव

स्तदङ्गतया अन्ये धर्मा इति तदर्थः। सारांशस्तु ईश्वरप्रयत्नस्य आरम्भः सृज्यमानजगत्परिपालनम् उद्दिश्यैव जातः, ततस्तत्सहकारितया अन्येषां धर्माणाम् उत्पत्तिरिति।

वस्तुतोऽङ्गस्य सार्थक्यं तदैव, यदा प्रधान-लक्ष्यसिद्धिः पूर्णतया तेन स्यात्। मीमांसकसम्मताङ्गत्वविचारेणायमंशः स्पष्टो भवति। "**परोद्देश्य-प्रवृत्त कृति-कारकत्वेन विहितः यस्तस्य तदङ्गत्वम्**" इति ते वदन्ति। अतः क्षात्रधर्मो यदि सुव्यवस्थितः स्यात् तर्ह्येव वर्णाश्रम-धर्मानुष्ठानस्यापि साफल्यम् अन्यथा तु तदनुष्ठानं व्यर्थमित्यायाति। एतादृशाङ्गाङ्गिभावविचारः पूर्वाचार्यैरपि कृतोऽस्ति। "**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन।**" एवम् —

"**तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।**
**मत्कथा श्रवणादौ वा श्रद्धा यावन्न जायते॥**"

इति श्रुतिपुराणादिवचनेषु ब्रह्मजिज्ञासाया भगवत्कथाश्रवणादौ श्रद्धाया वा समुत्पन्नायाम् एव वेदाध्ययनादि-धर्मानुष्ठान-साफल्यम् अन्यथा तु न इत्येव प्रतिपादनात्।

उक्त-महाभारत-वचने प्रयुक्तेनाङ्गत्व-बोधकेन "**शेषभूता**" इति पदेन तस्य विधिरूपता उन्नीयते। अतः क्षात्रधर्मस्योपेक्षा अन्येषामपि न केवलमनुचिता, किंतु ईश्वराज्ञोल्लङ्घन-मूलक प्रत्यवाय-जनिकापीति सिध्यति।

अत्र विषये क्षात्र-धर्म-पदस्य योग्या व्याख्याम् अजानद्भिरेवम् आक्षेप क्रियते यत् "**वर्णाश्रम-धर्माणाम् अनेकेषु विविदिषाविलक्ष्येषु क्षात्र-धर्म-पोषणम् अपि एक लक्ष्य वर्तते** । किं च क्षत्रियाणामेव तत्र विशेषत अवधानम् आवश्यक तेषा धर्मत्वान्नान्येषाम् । अतोऽन्यलक्ष्योद्देशनापि वर्णाश्रम-धर्मानुष्ठानस्य चारितार्थ्ये सम्भवति क्षात्र-धर्मापेक्षा नान्येषा दोषावहा स्यादिति ।

## यथावत् जगत्परिपालनम् एव क्षात्रधर्मः

परमत्र क्षात्र-धर्म-पदस्य "**जगतो यथावत् परिपालनम्** " इति व्यापकोऽर्थो विवक्षितो न सकुचित । विचार-शीलाना मनसि न कदापि '**जगत परिपालनम् अस्तु वा मा वा तेन का क्षतिरस्माकम्** " इति भावना भवितुमर्हति । प्रत्युत "**न उय जगतो बाह्या , अतस्तत्पालनम् एव अस्माक पालनम्** " इति ते वदिष्यन्ति । राष्ट्रस्य रक्षणेनैव हि तदन्तर्गतव्यक्तीना धनादीना च रक्षण सिद्ध भवति । अतो यदि रक्षणकर्मणि नियुक्त क्षत्रिय असमर्थस्तत्र भवेत्तदा आत्मरक्षणदृष्ट्या अपि प्राणिमात्र-सरक्षणोपेक्षा नोचिता । किंच यथा सर्वेषा स्व-स्व-विशेष-धर्मानुष्ठान कर्तव्यम्, तथा सामान्य-धर्मानुष्ठानमपि ।

अत कामन्दकेनापि उक्तम —

"**अहिंसा सूनृता वाणी सत्य शौच दया क्षमा ।**
**वर्णिना लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥** " इति ।

एतेषाम् उद्देश्य तु भूतपरिपालनमन्तरा किमन्यद् वक्तु शक्यम् ? अत्र विषये नाधुनिकानामपि वैमत्य भवितुमर्हति ।

धमशास्त्रनिबन्धानुसारेण अपि एतद्विचारस्य समर्थन भवति । तथाहि-याज्ञवल्क्येन व्यवहाराध्यायारम्भे उक्तम् —

'**व्यवहारान्नृपः पश्येद् विद्वद्भिर्ब्राह्मणै सह ।**
**धर्मशास्त्रानुसारेण क्रोध-लोभ-विवर्जितः ॥** " इति ।

## व्यवहारादि-राज-निर्णयः विद्वत्-संमत्या एव।

एव तत्रैवान्यत्र—

" श्रुताध्ययनसपन्ना धर्मज्ञा सत्यवादिन. ।
राज्ञा सभासद. कार्या रिपौ मित्रे च ये समा ॥ "

इत्यपि उक्तम् । उभयत्रापि व्यवहारादि-निर्णयो विद्वत्-संमति-पूर्वक राज्ञा कर्तव्य इति निर्दिष्टम् ।

अत्र पौनरुक्त्यपरिहारार्थं पूर्वश्लोके " ब्राह्मणै " इत्यस्य व्याख्या " अनियुक्तै. " इति कृता मिताक्षराकारेण । वेतन गृहीत्वा ये राजसभा प्रविशन्ति ते सभासद, ये तु निर्वेतनिका स्वतन्त्रा विद्वासस्तेऽनियुक्त-पदवाच्या भवन्ति । इत्थ च विरक्ताना स्वतन्त्राणा विदुषा न्यायालयादिषु गमनस्यैव कथ सभव ? इति प्रश्नो वीरमित्रोदयादि-ग्रन्थेषु समाहित । तत्र हि —यदि शासनारूढस्य राज्ञो न्याय-दाने अनौचित्यम् आवश्यक-प्रमाणाद्यज्ञान वा स्यात् तदा तत्र स्वयमुपस्थाय न्याय-सगत-प्रमाणादि-प्रदर्शनम् अनियुक्त विदुषा कर्तव्यम् । तेन च न्यायलाभाद् वञ्चितो वर्ग उपकृतो भवेदन तेषा राज्ञश्च ऐहिक-पारलौकिकोभयविध-श्रेयश्च सिद्ध भवेत् । अन्यथा "ज्ञात्वाप्येभिर्जगत्पालने उपेक्षा कृतेति ईश्वरकोपभाज-नान्येते स्यु ।" इति प्रतिपादितम् ।

एवमेव महर्षिणा गौतमेनाप्युक्त धर्म-सूत्रे । तत्र हि, ब्राह्मणादिभिर् द्विजातिभि स्वशुद्ध्यर्थं जन्मप्रभृति आमरण गर्भाधानाद्यष्टाचत्वारिंशत्-सस्कारा विधेया । तद्द्वारा च धर्मार्थ-काम-सिद्धि-पूर्वकम् अन्ते ईश्वर-प्राप्तिरूपो मोक्षोऽपि तेषा सिद्धो भवतीति प्रतिपादितम् । तेषु चत्वारिं-शत्-सस्कारा वैदिका. । अवशिष्टास्तु —

"दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यम् अकार्पण्यम् अस्पृहा ।" ( गौ ध सू ८–२१ ) इति सामान्य-धर्म-रूपा अष्टावात्मगुणा एव ।

इदमपि तत्रैव प्रतिपादितम् । यत् – " यस्यैते न चत्वारिंशत्-सस्कारा न च अष्टौ आत्मगुणा न स ब्रह्मण सायुज्य सालोक्य च गच्छति

यस्य तु खलु संस्काराणाम् एकदेशोऽपि अष्टौ आत्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति ।" इति । उक्त-सामान्यधर्माणां यथावद् अनुष्ठाने सत्येव अन्यैर्वैदिकसंस्कारैः जनिताया शुद्धेः साफल्यं भवेन्नान्यथा इति भाव ।

* * * * * * * * * * * * * * * * * * * * * * * *

## क्षात्रधर्म-रक्षणं सर्वेषां कर्तव्यम् ।

* * * * * * * * * * * * * * * * * * * * * * * *

एवं च जगद्रक्षणमेव सर्वेषां धर्माणां मुख्यं लक्ष्यम् इति स्मृतिकाराणामपि संमतम् इत्यायाति । अत उपर्युक्त-क्षात्रधर्म-पदस्य एतादृशव्यापकार्थकत्वं ज्ञायते । नीतिशास्त्रानुसारेण समन्वयपद्धत्या इदमपि वक्तुं शक्यं, यद् वर्णाश्रमधर्मानुष्ठानस्य फलत्वेन उपवर्णिता विविदिषा ईश्वरभक्तिर्वा वस्तुतः क्षात्रधर्मान्न पृथग्वर्तते इति । यतो हि, ज्ञानी ईश्वरभक्तश्च अत्यन्तं शान्त-स्वभावो भवत इति सहजत एव तयो राग-द्वेषराहित्य-पूर्वकं दयाऽहिंसादि-सामान्यधर्मानुष्ठानं घटते । अत एव भक्ता ज्ञानिनश्च ईश्वरकृपापात्राणि भवन्ति । श्रीमद्भागवतेऽपि उक्तम् —

"यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः ।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ इति ।

अत्रापि पदग्राह्या गुणास्तु विष्णुधर्मोत्तरपुराणस्थेन —

"सुशीलो भव धर्मात्मा मैत्रः प्राणिहिते रतः ।
निम्नं यथाऽऽपः प्रवणाः पात्रमायान्ति संपदः ॥"

— इति श्लोकेन अवगम्यन्ते । अत सामान्यधर्मानुष्ठानमन्तरा न ज्ञानी भक्तो वा कोऽपि भवितुमर्हति । भाव-प्रकाशनेऽपि

"यथाशक्ति परित्राणं दुःखितानां विशेषतः ।
विना रागेण सर्वत्र सुखिनामनुमोदनम् ॥"

इत्यादयः शान्तस्य स्वाभाविका गुणा उक्ता ।

एतावता विवेचनेन इदं स्पष्टं भवति, यद्वर्णाश्रमधर्मा जगत्परिपालनरूपक्षात्रधर्मस्य अङ्गभूता इत्यत क्षात्रधर्मरक्षणम् अपि अस्माकं सर्वेषां कर्तव्यमिति ।

एव प्रासङ्गिकाक्षेपसमाधानानन्तर स्थिरसधेरवशिष्टाशो निरूप्यते।

इतिहासतो ज्ञायते यद् भारतीयनीतिशास्त्रे वर्णितस्य स्थिरसधेर् लाभाद् भारतीयजनता न केवल सपूर्णस्य जगत किन्तु परमेश्वरस्यापि विश्वासपात्रम् आसीत्। अत एव स्वय भगवानपि अत्रैव अवतीर्य स्वलीला कृतवान् इति ।

देशसेविनो भारतीय-समाजस्य अन्तर्गतैर्विश्व-कल्याण-परायणैर् ब्राह्मणैरेव प्रथम स्थिरसधे शक्यसपादनता लोकेभ्य प्रदर्शिता । ततो ब्राह्मणसकाशादेव च सेवाद्वारा सर्वेण जगता स्थिरसधे शिक्षा प्राप्ता । अत सर्वेषा जीवन-क्रम शान्तिपूर्ण आसीत्। इदमेव तथ्य लक्ष्यीकृत्य क्षत्रियेणापि मनुना उक्तम् —

"एतद्देशप्रसूतस्य सकाशादग्रजन्मन ।
स्व स्व चरित्र शिक्षेरन् पृथिव्या सर्वमानवा ॥" इति।

स्थिरसधिद्वारा सर्वत्र व्यवस्थाया क्रियमाणायामेव राष्ट्रान्तर्गत-सर्वप्राणिनाम एकात्मभावेन सतोषपूर्विका स्थिति शक्यसपादना, नान्यथा। अतस्तदर्थं जनताया परलोके दृढनिष्ठाया आवश्यकता अस्ति इत्युक्तमेव।

◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆

## तान् अन्तरेण निपतेत् क नु मत्प्रणामः ।

◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆ ◆

एतादृशस्थिरसिद्धान्तस्य ज्ञान यस्मात् प्रमाणमूर्धन्याद अपौरुषेयाद् वेदाद् भवति, तस्य सरक्षण दुश्चरतपस्यापूर्वक देशसेवादृष्टया सामान्य-जनताया कृते विधाय ब्राह्मण-वर्गेण स्वीय कर्तव्य-परम् आदर्श-जीवन जगत पुरस्तात् स्थापितम्। अत एव भोजराजेनोक्तम् —

"उत्कर्षतिर्जगति सिध्यति धर्मतश्चेत् ।
तस्य प्रमा च वचनै कृतकेतरैश्चेत् ।
तेषा प्रकाशन-वशा च महीसुरैश्चेत् ।
तानन्तरेण निपतेत् क्व नु मत्प्रणाम. ? ।" इति।

एवरीत्या उत्तरोत्तर गौरव-भाजनान्यपि, येष्वद्यापि पूर्णतया विश्वास. कर्तुं शक्यस्तादृशा ब्राह्मणादयो वर्णा इदानी सर्वत्र उपेक्षाभाज-

नानि प्रवृत्तानि इत्यस्य कारणं तु स्थिरसर्वमूलभूतानां प्रोक्तानां चतुर्णां साधनानां विस्मरणम् एव एतेषाम् । अत एव वर्तमानसमये पूर्वपरम्परया स्वीकृतेषु तदुपायेषु एतेषाम् अवधानं यथा स्यात् तथा प्रयत्न आवश्यक इति प्रतिभाति ।

प्रोक्तेषु चतुर्षु स्थिरसर्वोपायेषु प्रतिभूपदवाच्यम् उत्तरदायित्व जन्मत एव एतेषु वर्गेषु स्थापितं वर्तते । यानि खलु कार्याणि विशेषत परम्परया कर्तव्यत्वेन प्राप्तानि, तेषां ज्ञानस्य अविच्छेदं प्रथमत आवश्यक इति तत्र प्रयत्यते ।

वेद-तात्पर्य-प्रकाशकेषु स्मृति-ग्रन्थेषु इदमुलभ्यते, यत्

" प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्वा परिददे प्रजा ॥
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्या कथञ्चन ॥ " इति मनुः ।

अयमर्थः —प्रजासंरक्षणभारः सृष्टिकालात्प्रभृत्येव क्षत्रियेषु च स्थापितः, पशुसंरक्षणं च वैश्येषु । अतस्तत्तत्कार्येषु तेषामुपेक्षा न युक्ता, एवमन्यस्य स्वकार्यक्षमतायाम् अन्येन तत्कार्यकरणम् अपि अयुक्तमिति । तत्र राज्ञोऽभावे प्रजासंरक्षणं ब्राह्मणानामेव कर्तव्यम् । किन्तु तदुपेक्षणमधुना तैः क्रियते इति, एकतः कर्तव्यच्युतलोके परिहास्यता, अन्यतः ईश्वरकोपपात्रता च एतेषु सवृत्ता वर्तते । एतादृश स्वकर्तव्यभारः कथमपि न विस्मरणार्हः उपेक्षार्हो वा ।

## स्वकृतस्य शपथस्य अवहेलनम् ।

एवमेव स्वकृतस्य शपथस्यापि अवहेलनम् उक्तवर्णेन क्रियते । बन्धविनि-ब्राह्मणादीनां समक्षं " प्रजापालनोपयोगिनां कतिपय-कर्तव्यानां पालनं करिष्यामो वयम् " इति प्रतिज्ञा एतैः कृता इति तद्विरुद्धाचरणम् एतेषां न युक्तम् । तथा हि " अष्टवर्षं ब्राह्मणमुपनयीत " —इति श्रुतौ,

एव— "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विश " ॥

— इति, मनुस्मृतौ च प्रतिपादितं वर्तते । तदनुसारेण अद्यापि द्विजेषु उपनयनसंस्कार सानन्द प्रचलन्ति । तत्र प्रत्येक ब्रह्मचारिणे गुरुणा गायत्री-मन्त्र, तथा "दिवा मा स्वाप्सी । ब्रह्मचार्यसि, स्वाध्यायान्मा प्रमद, सत्य वद, धर्मं चर, मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव, कुशलान्न प्रमदितव्यम्, अपोऽशान, यान्यस्माक सुचरितानि तानि त्वयोपास्यानि ।" इत्यादीनि राजनीतिदृष्ट्या प्रजापालनोपयोगीनि कर्तव्यानि चोपदिश्यन्ते । तत प्रत्येकेन ब्रह्मचारिणा गुरुदेवाग्निबान्धवाना समक्ष "बाढम" इति स्वीक्रियते च । अनन्तद्विपरीताचरण यद्यस्माभि क्रियेत तर्हि लोके कथ विश्वास्या भवाम. ? इति स्वय सर्वैर्विचार कर्तव्य । सर्वेषा हृदि स्थितेन परमेश्वरेणापि एतादृशप्रमादशीलेषु उपेक्षा एव क्रियेत । सन्त एव स्वकृत-प्रतिज्ञाया माहात्म्य जानन्ति, अतस्तै कदापि स्वप्रतिज्ञाविरुद्धाचरण न क्रियते इति ते कीर्तिमन्तो लोकानुरागपात्राणि पारलौकिकश्रेयोभाजश्च भवन्ति । अत्र विषये युधिष्ठिर एवोदाहरणम् । 'यत्किमपि वा भवतु, यदेकवार मया उच्यते, ततो न कदापि विचलितो भवेयम् ।—" इति तस्य प्रतिज्ञा एव आसीत । आत्रयोदशवर्षं वनवासादिना कष्ट सोढ्वा च तेन स्वीयसत्यवादिता प्रकटीकृता लोकाना पुरत । यतो यादवादीना प्रियता प्राप्य अपक्षपातिना दुर्योधनाय दण्ड प्रदाय च अन्यायान्मोचितो देश " इति ।

अत्र "ब्रह्मचारिभिर्ज्ञानपूर्वक शपथो न गृह्यते, तद्विषये तेषामज्ञत्वात् किन्तु गुरुभिरेव मानुबन्ध शपथ ग्राहयित्वा ते शृङ्खलया बध्यन्ते । अतस्तादृशशपथस्य अपरिपालने न कोऽपि दोष " इत्यर्वाचीनैराक्षिप्येत । अस्येदमेवोत्तर, यद् विद्यावृद्धैर्गुरुजनैर्हितैषिभिस्तादृशनिर्बन्ध एव कुत क्रियते ? इति तै प्रथमतो ज्ञेयम् । यत पूर्वजै स्वय देश-हित-दृष्ट्या नीतिरूपेण तादृशकर्तव्य-पालनेन लोकानुरागो यशश्च सप्राप्तम् अतस्तेषा हितसाधनताबुद्ध्यैव एव क्रियते इत्यवश्य वक्तव्यम् । परमदीर्घदर्शितया पुरोभाविन हितमविज्ञाय मदेन गुरुजनानामुपर्येव दोषदानकल्पनापि एतेषा पशुताया परिचायिकैव । यद्येतेभ्य स्वहितेच्छया पूर्वजै कृत

कर्तव्यनिर्बन्धो न रोचते तर्हि तं क्रियमाणा शिक्षणादीनाम् आयव्ययव्यवस्थापि न्यायालये कथं मान्या भवेद् ? भाविजीवनमुद्दिश्य क्रियमाणत्वात् तस्या इति चेत्तर्थंवोवनशपथविषयेऽपि तं कुतो न ज्ञायते ?

## आचार-पालनेनैव विश्वास्यता

त्रैवर्णिकानामिव शूद्राणामप्युन्नत्यर्थं तत्तत्कुलोचित-विहित-मन्त्र-दीक्षाया अवसरे पूर्वोक्त-सामान्य-धर्मानुष्ठानम् उद्दिश्य शपथ-ग्रहणम् उक्तम् ।

एवं स्त्रीणाम् अपि विवाह-प्रसङ्गे सुप्रजाभिवृद्ध्यर्थं देवाग्निगुरुबन्धूनां पुरतः शपथग्रहणं विहितम् । एतादृश-शपथ-परिपालनेनैव सीता-सावित्र्यादीनां यशोऽद्यापि गीयते । तात्पर्यमिदमेव, यत् प्रत्यक्षानुमानशब्दैर् येषां हितसाधनता निश्चिता, तादृश-कर्तव्य-विषये एव पूर्वजैरुपनयनादि-प्रसंगेषु शपथो ग्राह्यते, न स्वमनःकल्पितेषु । अतस्तादृश-शपथानामुपेक्षा सर्वथा न युक्ता । सम्यग्विचारपूर्वकं तादृश-परम्परागताचाराणां पालनेनैव लोकेभ्यो विनिर्गता विश्वास्यता अस्मासु पुनः स्थिरा भवेत् । तदर्थम् अयमेव मार्गो नान्य इति ।

किंच स्थिरसन्त्यर्थमपेक्षितः प्रतिग्रहोऽपि एतेषां सविधेऽस्ति । यतः एतेषां प्रतिभूत्वशपथयोः अनुकूलं व्यवहारं दृष्ट्वा लोकैरेव केवलं न देश-हितदृष्ट्या मठ-मन्दिर-धर्मशालादीनां व्यवस्था ब्राह्मणादिवर्गेषु स्थापिता वर्तते, किन्तु भगवता अपि स्वयं मूर्तिरूपेण अवस्थाय स्वीयस्नानभोजना-दिव्यवस्थाऽपि एतेषामेव हस्ते समर्पिता इति शास्त्रतो ज्ञायते । एवं च प्रतिभूत्वशपथ-परिग्रहाः स्थिरसन्त्यर्थम् आवश्यकाः, एतेषाम् आधारभूतः परलोकविश्वासश्च वर्णाश्रमिजनेष्वद्यापि सन्ति । तथाप्येतद्विस्मरणेन साम्प्रतं विशेषतः प्रजापालने अधिकृतो ब्राह्मणवर्गोऽन्यः समाजश्च तद्-विपरीतमार्गेण प्रचलितो वर्तते । एतस्य परिणामः सर्वत्र कलहभेदनीत्या-दीनां वर्धनम् । परमन्ते समस्तानां दोषाणाम् उत्तरदायित्वं ब्राह्मणानाम् उपर्येव आयास्यति इत्यवश्यं ज्ञातव्यम् । अस्मिन् विषये एको दृष्टान्त

* * * * * * * * * * * * * * * * * * * * * * * * * * * *

## ब्राह्मणत्वस्य हि रक्षणेन वैदिक-धर्म-रक्षणम् ।

* * * * * * * * * * * * * * * * * * * * * * * * * * * *

उच्यते, येनेदं स्पष्टं भवेत् । यथा कस्मिंश्चिद् ग्रामे कस्यचिद् धनिकस्य हस्ती यदि मत्तः सन् शृङ्खलां भङ्क्त्वा निर्गतो ग्रामे सर्वत्र इतस्ततो नागरिकाणां सम्पत्तेर्नाशं कुर्यात् तर्हि शासकास्तदुत्तरदायिने स्वामिने एव दण्डं विदध्युर्न तु हस्तिने, तथा समाजो यदि कुपथ-गमनेनाधोगतिं प्राप्नुयात्तर्हि तदानीं समाजधुरीणानामेवायं दोष इति विरोधिनामाक्षेपः अवश्यभाव्येव । अत उपर्युक्तस्थिरसविकारणानां विस्मरणम् उपेक्षा वा विश्वासघातरूपत्वाज्जनापरागहेतु ।

ब्राह्मणानाम् आचार-भ्रष्टतायां समाजोऽपि दूषितो भवतीति मनुनाप्युक्तम् —

" शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥ " इति ।

" ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः । "— इति च श्रीशंकराचार्याः ।

वेदप्रामाण्यानभ्युपगन्तॄणां विषये न किमपि वक्तव्यमत्र, किन्तु यैस्तत्प्रामाण्यमङ्गीक्रियते, तेषां कृते स्थिरसत्युरायान् स्मरयितुं प्रयत्नः कृतः । यतो हि ब्रह्मोपदेशे शम-दमादि-साधनचतुष्टय-सम्पन्नानामिव प्रोक्त-सत्यादि-चतुष्टयवतामेव नीत्युपदेशेऽधिकारित्वम् । अतस्तेषाम् उपेक्षणेन ईश्वरस्य समाजस्य च कोपो भवेदिति भारतीयैस्तथा भारतीयराजनीति-विषयेऽपि सम्पूर्णतयाऽवधानं देयमिति सानुबन्धं निवेद्यते । यतो विषम-प्रसङ्गेषु कर्तव्य-निर्धारणे न केवलं बुद्धेः सामर्थ्यं किन्तु शास्त्रमेव तत्रापि मार्गदर्शकं भवितुमर्हति । एवं रीत्या पाश्चात्त्य-नीत्यनुसारेण समुपस्थित-स्यैकस्य प्रश्नस्योत्तरं यद् द्विसहस्रवर्षेभ्यः पूर्वमेव भारतीय-दृष्ट्या आचार्य-चाणक्येन लिखितं तस्यैव स्पष्टीकरणं कृतम् ।

अथेदानीं पाश्चात्त्य-शैल्या प्रचलितायां निर्वाचन-पद्धत्यां स्थिता दोषा भारतीयनिर्वाचनपद्धत्यनुसारेण तन्निवारणोपायाश्च समुपस्थाप्यन्ते।

ये खलु लोकमतानुसारेण कार्यकरणे समर्थास्तादृशानामेव मन्त्रिणां शासनकार्ये आवश्यकता भवतीत्यत्र न कस्यापि विवादः येषु च राष्ट्र-

## निर्वाचन-पद्धति-दोष-निवारणोपायाः ।

हितोपयोगिनो विशिष्टा गुणा सन्ति, तादृशाना योग्याना निर्वाचन स्व-मतदान-द्वारा समाजेन क्रियते, तद्द्वारा निर्वाचिता एव च शासन-सभा प्रविशन्तीति निर्वाचन-शैली वर्तते । तत्र नायकेषु राष्ट्रहित-दृष्ट्या ये ये गुणा आवश्यका येषा च परीक्षा राज्ञा जनतया वा कर्तव्या भवति, तेषा परिगणन राजनीति शास्त्रे एव कृतमस्ति यदाह कामन्दक —

" स्वदेशजो जानपद कुल-शील-बलान्वित ।
वाग्मी प्रगल्भश्चक्षुष्मान् उत्साही प्रतिपत्तिमान् ॥
स्तम्भ-चापल-हीनश्च मैत्र क्लेशसह शुचि ।
सत्य सत्त्व-धृति स्थैर्य-प्रभावारोग्य-सयुत ॥
कृत-शिल्पश्च दक्षश्च प्रज्ञावान् धारणान्वित ।
दृढभक्तिरकर्ता च वैराणा सचिवो भवेत् ॥
स्मृतिस्तत्परतार्थेषु वितर्को ज्ञान-निश्चय ।
दृढता मन्त्रगुप्तिश्च मन्त्रिसम्पत्प्रकीर्तिता ॥ इति ।

अत्र बुद्धि-कर्म-सचिवयोस्तारतम्येन कर्मसचिवापेक्षया बुद्धिसचिवस्य मन्त्रिण श्रेष्ठत्व प्रतिपादितमस्ति । यतो बुद्धिसचिवे प्रोक्ता त्रयस्त्रिंशद् गुणा अपेक्षिता, अन्तिम-गुण षट्क-हीनोऽपि तु कर्मसचिवो भवितुमर्हति । उक्तगुणाना व्याख्या क्रमेणैव वर्तते । यथा—

" साङ्कुशता, स्वदेश-जन्म, कुलीनत्व, सुस्वभाव, काय-बलवत्त्व, वक्तृत्व, निर्भीकत्व, शास्त्रज्ञता, दाक्ष्य-शैघ्र्यामर्ष-शौर्य-लक्षण उत्साह, प्रतिभा-शालित्व, निरभिमानित्व, चापल्यराहित्य, मित्रार्जन-कौशलम्, कष्टसहिष्णुता, परीक्षा-शुद्धि, सत्यवादिता, व्यसनेऽभ्युदये चाविकारित्व, धीरता, स्थिरता, प्रभुत्व, नीरोगता, कलानैपुण्यम्, अनालस्य, बुद्धिमत्त्व, धारयिष्णुता, स्वामिभक्ति विरोधनिवारकत्वम्, अविस्मरण, कार्यपरता, विचारशीलत्व, यथार्थनिश्चयवत्त्व, दार्ढ्य, रहस्य-गोपन-क्षमता चेति ।

एतेषा राष्ट्रोपकारित्वे न कस्यापि विवादो भवितुमर्हति । प्रत्येक गुणस्य प्रयोजन तु जयमङ्गलादि-नीतिसार-टीकातोऽवगन्तव्यम् ।

* * * * * * * * * * * * * * * * * * * * * * * *

## मन्त्रिणां व्यसनानि राज्यविघातकानि

* * * * * * * * * * * * * * * * * * * * * * * *

एतेषु गुणेषु यदि केषाञ्चन न्यूनता मन्त्रिषु स्यात्तर्हि तदीयशासन-व्यवस्थायामपि न्यूनता अवश्यभाव्यम् ।

किंच मन्त्रिषु सदा व्यसन-राहित्यमपेक्षितम् । अन्यथा तेषां राष्ट्रस्य च अहितं निश्चितमेव । अतस्तन्निवृत्तावपि प्रोक्तगुणानामत्यन्तम् उपयोगो वर्तते । मन्त्रिणां व्यसनानि राज्यविघातकानि भवन्तीत्यत्र नास्ति मनागपि संशयलेशोऽपि ।

तानि च नीतिसारे (१४ सर्गे) वर्णितानि । यथा —

" वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं स्त्री मृगया द्यूतं व्यसनानि महीपते. ।।
आलस्यं स्तब्धता दर्पः प्रमादो वैरकारिता ।
इति पूर्वोपदिष्टं च सचिव-व्यसनं स्मृतम् ।। इति

एतादृश-व्यसनेभ्यः परावृत्तौ, तज्जन्य दोष-परिहारे च कथं पूर्वोक्तगुणानामुपयोग इत्यपि नीतिसार-व्याख्यात एव बोद्धव्यम् । अत्र तु केवलं पाश्चात्त्यनिर्वाचनपद्धतेर्दोषस्तत्परिहारोपायश्च विमृश्यते ।

मनुष्यस्य श्रेष्ठता न शरीरधारणमात्रेण, किन्तु गुणानुसारेण भवति । अत एव हितोपदेशे उक्तम् –

"गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ।"

शासनभारो येषु स्थापनीयस्तेषु गुणपरीक्षा राज्ञा तत्स्थानीयया जनतया वा कर्तव्या । अन्यथा शासन-सभा-प्रविष्टेषु कियन्तो गुणाः सन्ति ? केषां च न्यूनतेति कथं ज्ञायेत ? अतस्तेषां परीक्षा कर्तव्यतया कामन्दकेन विहिता ।

' उपेत्य धीयते यस्मादुपधेति ततः स्मृता ।
उपायं उपधा ज्ञेया तयाऽमात्यान् परीक्षयेत् ।। " इति ।

अस्यार्थं — " यथा जपाकुसुम-संसर्गात् स्फटिकोऽपि रक्तो भवति, तथैव शासनसभासदस्योऽपि प्रसङ्गविशेषे स्वगुणान् परित्यजति न वेति विविध-स्वभाव-युक्तान् जनान् संयोज्य तद्द्वारा तद्गुण-परीक्षा कार्या ।

## प्रत्यक्ष-परोक्षानुमेया हि राजवृत्तिः ।

तादृशपरीक्षोपायानामुपक्षेति सज्ञा" इति । तदुपायाश्च प्रत्यक्षानुमान-शब्दा । तदुक्तम् —

"प्रत्यक्ष-परोक्षानुमेया हि राजवृत्ति । स्वय दृष्ट प्रत्यक्ष, परोपदिष्ट परोक्ष, कर्मसु कृतेन अकृतावेक्षणमनुमेयम्" इति ।

तत्र केषा केषा गुणाना कीदृशप्रमाणद्वारा परीक्षा विधेयेत्येतस्मिन् विषये कामन्दकेनोक्तम् । यथा —

". . . प्रागल्भ्य प्रतिभा तथा ।
कथायोगेषु बुध्यते वाग्मित्व सत्यवादिताम् ॥
.. . . वैराणामप्यकर्तृताम् ।
प्रत्यक्षतो विजानीयाद् भद्रता क्षुद्रतामपि ॥" इति

अयमर्थ — निर्भीकत्वादय प्रोक्ता गुणा लोकप्रियतारूपा भद्रता, क्षुद्रपरिवारता च, वादगोष्ठ्या सम्यगायोजनपूर्वक तत्र स्वयम् उपस्थाय प्रत्यक्षत परीक्ष्या इति । इतरत्र सामान्यत प्रवक्तृणामप्येतादृशविचारगोष्ठी-प्रसङ्गे न सम्यग्-वक्तृतादीना प्रादुर्भावो भवतीति तत्रैव तेषा परीक्षण विहितम् । एवरीत्या परीक्षित-गुणाना तु सदस्यानामादर अवश्य कर्तव्य. समाजेन ।

अनुमानेन परीक्ष्या गुणास्तु —

"उत्साह च प्रभाव च तथा क्लेश-सहिष्णुताम् ।
धृति चैवानुराग च स्थैर्य चापदि लक्षयेत ॥
परिकर्मसु वाक्य च विज्ञान धारयिष्णुताम् ।
गुणत्रय परीक्षेत . .
भक्ति मैत्री च शौच च जानीयाद् व्यवहारत ॥"

— इत्यनेन प्रोक्ता । आपत्स्वपि स्वकर्तव्यनिष्ठया उत्साहादिगुणाना निर्णयो भवति । "प्रारब्धमुत्तमजना न परित्यजन्ति ।" —इति न्यायेन

ये खलु विचारपूर्वकमेव कार्याण्यारभ्यन्ते, आसमाप्ति तत्र प्रयत्यते च, तेषु धृत्यादयोऽनुमातव्या ।

कस्मिंश्चिद् विशिष्टकार्ये नियुक्तानां रहसि धनादि-प्रलोभन-द्वारा "एते शत्रुभेद्या न वा" इति परीक्षणं कृते तेषु भक्त्यादयः सिद्ध्यन्ति ।

## पुरा गुणपरीक्षणानन्तरमेव युवराज-नियुक्तिः ।

विषयेऽस्मिन्न केषाञ्चिद् वैमत्यं वर्तते । अत एवाधुनाप्यधिकारिवर्गेणैतदुपाय परीक्षणं क्रियते । एवमेव पुरा राजभिरपि गुणपरीक्षानन्तरम् एव योग्या स्वपुत्रा यौवराज्ये नियुज्यन्ते स्मेति पुराणादिषु वर्णनम् उपलभ्यते । लोकमतरूपेण शब्दप्रमाणेन परीक्ष्या गुणाश्च —

"साधु तेषाममात्यानां तद्विद्येभ्यश्च बुद्धिमान् ॥
चक्षुष्मत्तां च शिल्पं च परीक्षेत गुणद्वयम् ॥
स्वजनेभ्यो विजानीयात् कुलं स्थानम् अवग्रहम् ।
सवासिभ्यो बलं सत्त्वमारोग्यं शीलमेव च ।
अस्तब्धतामचापल्यं ।" इत्युक्ता

अस्यार्थः —विदुषां सजातीयानां, सहवासिनां च बहुमतेन विभिन्नगुणानां परीक्षणम् आवश्यकम् इति ।

विषयप्रसङ्गेषु शास्त्रमेव मार्गप्रदर्शकं न तु बुद्धिमात्रं तन्निराकरणे प्रभवतीति मन्त्रिषु विद्वत्ता अपेक्षिता । तदुक्तं किरातार्जुनीये —

"मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥" इति ।

"विद्वानेव विजानाति विद्वज्जन-परिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥" इति

न्यायेन विद्वत्तापरीक्षाथां विदुषां बहुमतमेव आदर्तव्यं नान्येषाम् । अतोऽद्यापीदं दृश्यते, यद् विश्वविद्यालयीयादि-प्रमाणपत्रानुसारेणैव उन्नतस्थानेषु जनानां विनियोजनम् । अत्रविषये भारतीय-पाश्चात्यनीत्योर

महदन्तर विद्यते । यतो हि, भारतीय-नीतिशास्त्रानुसारेण शासन-सभा-सदस्याना सर्वेषामपि पूर्णतया विद्वत्ताऽपेक्षिता । पाश्चात्यनीतौ तु कतिपयानाम् एव अत्यल्पमङ्ख्याकाना विद्वत्-प्रतिनिधीनामपि स्थान कल्पितमिति सर्वेऽवस्था नावश्यकत्वम् । एतेन ज्ञायते, यत् मत-गणनाया न विदुषा वैशिष्टयम् अपेक्ष्यते, किन्तु सर्वसाधारण्येन बहुमतमात्रम् । अत शासनसभाया विदुषा बहुमत दुर्लभ भवति । अस्य परिणाम सर्वेषु राजकार्येष्वेकसूत्रता विरहो विशृङ्खलता च । अयमेव महान् दोष पाश्चात्य-नीते ।

## पूर्वं निर्वाचनपद्धति-निर्देशः सवासि-मत-शब्देन ।

मन्त्रिषु विद्वत्ताया इव लोकमतस्यापि परीक्षा भारतीय-नीति-शास्त्रे उक्ता । अत प्रचलद्-रूपा निर्वाचन-पद्धतिरधुनैव प्रचलितेति न, पूर्वमप्यासीत् । किन्तु सवासि-मत-शब्देन सापि तत्र निर्दिष्टा । सदस्यो यस्मिन् क्षेत्रे वसति, तत क्षेत्रवासिभिरेव शासन-सभासदस्व-योग्य इति यन्मतदान क्रियते, तादृश-लोकमतस्य आवश्यकताया रहस्य किंचिद् विव्रियते ।

नागरिक कोऽपि कुत्रचित् स्वनिवासात् पूर्वं समीपे कश्चित्सुशील सज्जनो वसति न वेति स्त्री-पुत्र-धनादीना सरक्षणचिन्तयाऽवश्य पश्यति । यत सर्पजुष्टे गृहे इव दुष्टाना प्रतिवेशे वसतिरप्यतिभयकरा । तत्र न केवल स्त्रीणा सतीत्व-रक्षाया असभव किन्तु प्राण-रक्षाया अपि । न्यायालये साक्ष्यदानार्थमपि न कोऽपि सन्नद्धो भवेत् तत्र । यत्र तु बलवन्त सज्जना निवसन्ति, तत्र निवासेन हि तत्सहवास-जन्यस्तदीय-सुस्वभाव-सङ्क्रमोऽज्येष्वपि भवति । तेन चान्योन्य सर्वथा सौख्य सम्पद्यते । अत एव कामसूत्रे उक्तम् —

" नगरे पत्तने खर्वटे वा महति सज्जनाश्रये स्थानम् ॥ इति । "

अतश्च राज्ञा तत्स्थानापन्नजनतया वा तादृश स्थानमेव प्रथमतो ज्ञेयम्, यत्र लोक-विश्वास-पात्रस्य सुस्वभावस्य च पुरुषस्य वासो भवेत् ।

यतो हि – तादृशस्य योग्यपुरुषस्य निर्वाचनेन राज्ञ शासन-सस्थाया वा महत्त्व, तत्र लोकविश्वासश्च वर्धते।

निर्वाचनद्वारा इदमेव ज्ञायते, यत् शासनसभा-सदस्यत्व-योग्यो निर्विरोधो निर्दोष सुशीलश्च पुरुष क ? इति। तत्र बलसत्त्वारोग्यादीना ज्ञान यथ. निकटवर्तिना सुलभ तथा न दूरवर्तिनाम्। एतदनुरोधेनैव —

"पश्य लक्ष्मण ! पम्पाया बक परमधार्मिक ।
शनै शनै पद धत्ते जीवाना वध-शङ्कया ॥

इति श्रीराम-लक्ष्मणयो सवाद मति बकमुद्दिश्य "**सहवासी विजानाति चरित्र सहवासिन** ।"— इति मत्स्यानामन्तर वर्णित रामायणे। यतोऽनया निर्वाचन-पद्धत्या सदस्य-स्थिनाना प्रोक्त बलादि-गुणाना परीक्षाया सभवस्ततो राजनीतिज्ञै प्रचालितेय निर्वाचन पद्धति समीचीनैव ।

## सत्त्व तु राजनीतेः प्राणा. ।

पूर्वोक्तबलादिपदानामर्थोऽर्थशास्त्रे एव वर्णित । बल नाम युद्धादि कार्य-सामर्थ्यम्। सत्त्व तु अत्यन्त-महत्त्वपूर्ण राजनीते प्राणा एव। अतस्तद्विषये स्वतन्त्ररूपेणाग्रे विचार करिष्यते। सक्षेपत नि सदिग्धतया नीतिमार्गानुसरण तदिति वक्तु शक्यम। आरोग्यम–शरीरे वात-पित्तादीना साम्य, तदुपाया आयुर्वेद-योगशास्त्रादिषु वर्णिता । शील सत्त्वपरिचायक सुस्वभावरूपम्। एतेषा गुणाना परिचय प्रतिवेशिनाम् । अतस्तैर्निर्विरोधम एतादृश गुण-युक्ताय स्वेच्छया मतदान क्रियते। तथा हि — वैवस्वतमनुना न राजपद काङ्क्षितम्। न वा तदर्थ कोऽपि प्रयत्न प्रचारो वा कृत । पर परस्पर मात्स्यन्यायेन पीडिताभि प्रजाभिरेव स्वय साग्रह गुणितया तस्य स्वशासक-पदे स्थापन कृतम्। तदुक्तम् —

"**मात्स्यन्यायाभिभूता प्रजा मनु वैवस्वत राजान चक्रिरे** ' इति।
**संवासिभ्यो बल सत्त्वम्** । इति वचनस्यापि अयमेव आशय ।

अस्मिन्नशे भारतीयपाश्चात्यराजनीत्यो साम्य दृश्यते, पर केवलम्

एतावता सदस्यत्व-योग्यता-निर्णय-पूर्वकं शासनसभाप्रवेशानुमतिर्भारतीय-नीतिदृष्टयाऽत्यन्त दोषावहा । किंबहुना, एतर्ह्येव दोषस्य परिणामोऽधुना सर्वत्र -अशान्ति-रूपेणानुभूयते लोके । तन्निवारणोपायस्तु भारतीये नीतिशास्त्रे एव वर्णित ।

## मनुष्य-मात्र-स्वाभाविकः सत्ता-मदः ।

उपर्युक्तगुणवत्तामात्रेण निर्वाचितस्य मन्त्रिपद-प्राप्त्यनन्तरं सत्तादि-मदेन स्वभावपरिवर्तनं शनैः शनैर्भवेदिति कथं वक्तुं शक्यम् ? यतो मनुष्यमात्रे स्वाभाविक एवैष सत्तामदो नाम । यस्य च गुर्वाज्ञाव्यतिक्रम सुहृदामपमानादर इत्यादयोऽनुभावा । अत एवोक्तं चाणक्येन—

"**अवश्यकर्माणो हि मनुष्यास्चित्तानित्यत्वात् कर्मसु नियुक्ता विकुर्वते**" इति ।

नित्यत्वादितिपदम् अतिगम्भीरार्थकम् । तथाहि मनुष्यस्य शोभना हि सस्कारा निमित्तविशेषात् नूतन-सस्कारैरभिभूयन्ते इत्यनुभवसिद्धम् । तत्र येषा सस्काराणा नाहजिकत्व ते स्वभाव-पद-वाच्या । निमित्त-विशेषात् स्वभावमभिभाव्य येषाम् उत्पत्तिस्ते चित्तपदवाच्या भवन्ति । तदुक्तम् "**स्वभावचित्तज्ञता युक्तम् ( १९-३६ )**" इति नीतिवाक्ये श्लोक व्याख्यावसरे जयमङ्गलायाम् ।

"**तत्राश्रवीनां सहजो धर्मं स्वभाव, आकस्मिकस्त्वभिप्राय-श्चित्तम्**" इति । चित्तस्य स्वभावाभिभावकत्वे उदाहरणमिदमेव, यदर्जुनस्य क्षत्रियत्वोचितयुद्धसस्कारसत्त्वेऽपि महाभारत-युद्धावसरे धनु-स्त्यागपूर्वकं श्रीकृष्ण प्रति "**गाण्डीव स्रसते हस्तात् त्वक्चैव परिदह्यते**" इत्यादिना दैन्य-भाव-प्रकटनम् । एतत् तत्त्व विजानता श्रीकृष्णेन ज्ञानो-पदेशद्वारा तस्य आकस्मिकी मलिनता दूरीकृत्य पुन तत्स्वभावस्योद्बोधन कृतम् । अतो धार्मिके ज्ञानवति च पुरुषे एव चित्तरूप-बाह्य-सस्काराणा प्रभावो न स्थिरो भवतीति सिध्यति । ये खलु न तादृशास्तेषून्नत-पद-स्थित्या अपि मदादीना प्रादुर्भावो यथा न स्यात्तथा कश्चनाङ्कुशोऽपेक्षित

इति, अर्थशास्त्रे तादृशी व्यवस्था अपि उक्ता । इदमेव भारतीयराजनीतेर्वैशिष्ट्यम् । अत्रैतादृशी परीक्षापि विहिता, यस्या पाश्चात्यनीत्यनुसरणेन असम्भव एव । अस्या परीक्षायाम् उत्तीर्णस्य तु शासनसभाप्रवेशे सम्पूर्णा योग्यता भवति । इयं परीक्षा कामन्दकेन— "स्वजनेभ्यो विजानीयाद्" इत्यत्रोक्ता ।

निर्वाचने यथा विदुषा साधारणजनतायाश्च बहुमतस्य अपेक्षा विद्यते, तथैव तत-सजातीयानामपि स्वतन्त्ररूपेण बहुमतमपेक्षितम् । येन तत्कुलादि-परीक्षण भवेत् । यत सजातीयैं सह विवाह-संस्कार सर्वेषां भवति, तैरेव कन्यावरपक्षयो परस्पर मेलनस्य क्रियमाणत्वात् । अत कुलस्य शुद्धता त एव ज्ञातु प्रभवन्ति । परमस्या कुलीनताया या अपेक्षा अधुना सर्वे क्रियते तत्परिणामोऽतिगम्भीर-क्षतिकरो भविष्यति । तथा हि — मन्त्रिण कुलीनत्वाभावे स्वभावसिद्धानामपि सत्त्वशीलादीनाम् आनुकूल्येन कार्यं कर्तु न शक्नोति स । केवल शिक्षया तादृश-क्षते पूर्ति कदापि न कर्तुं शक्या । कुलीन एव विपत्काले अपि सोत्साह स्वकर्तव्य-पालन कर्तुं प्रभवति नान्य । तदुक्त कामन्दकेन ( ४ सर्गे )

> "समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसंशयम् ।
> दर्शयेत् स्वच्छहृदय कुलीनश्चतुरस्रताम् ॥"— इति ।

अस्य श्लोकस्यावतरणिकाया सत्कुलमित्यस्य प्रयोजनमाह – समुत्पन्नेष्वित्यादि इत्युक्त जयमङ्गलाकारेण ।

आयुर्वेदानुसारेण नियम-युक्तयोरुत्तम संस्कारवतोश्च स्त्रीपुरुषयो रजोवीर्य-संयोगेन विनीताया नीति-कुशलायाश्च सन्ततेरुत्पत्तिर्निश्चिता वर्तते एतादृशी सन्ततिरल्पेनैव कालेन नीतिज्ञा सती राजकार्य-निर्वहणे समर्था भवति । महाकविना कालिदासेनापि कुलीनताया स्वरूपमेवम् एव वर्णितम् —

> युवा युगव्यायतबाहुरंसल कपाटवक्षा परिणद्ध-कन्धरः ।
> वपुःप्रकर्षादजयद्गुरु रघुस्तथापि नीचैर्विनयाददृश्यत ॥— इति ।

आपत्काले कुलीनताया कथमुपयोगो भवतीति कर्णार्जुनयोर्युद्धप्रसङ्गेन ज्ञातु शक्यम् । तथा हि – समराङ्गणेऽर्जुन जेतु क्रुद्धेन कर्णेन

असकृद् बहु प्रयतितम् । पर यदा यदाऽर्जुनेन तद-बाण-प्रतिरोध-पुरस्सर तस्योपरि बाण-प्रहार कृतस्तदा तदा त सोढुमशक्तेन तेन तत पलाय्यते स्म । तथाप्यात्मान सूत-पुत्र मन्वानस्य तस्य न कदापि लज्जाया अवमानस्य वाऽनुभवो जात । अत्यन्त पीडितेनाप्यर्जुनेन तु युद्धात् पलायन क्षत्रिय कुल-मर्यादा-विरुद्धत्वाद् अनुचितमिति मत्वा स्थिरतया विजयश्रिय प्राप्यैव रणान्निवृत्तमिति । कुलीनताया इदमेव प्रयोजनम । अत एव भोजराजनापि तस्या प्रशसा कृता ।

> सत्त्वात्मनाममलधर्मविशेषजन्मा
> जन्मान्तरानुभववासनयाऽवतीर्ण. ।
> सर्वात्मसपद्वुपयातिशयैकहेतुर्
> जागर्ति कोऽपि हृदि मानमयो विकार । इति ।

अत्राप्युत्तमजातीयाना पशुफलान्नादीना निर्माणार्थं तादृशजातीय-बीजसरक्षणे यतो वैज्ञानिकै प्रयत्यते, ततो यासु राष्ट्रहितस्य निर्भरस्तादृशीना सुप्रजाना निर्माणार्थं कुलीनतारक्षणविषयेऽपि नीतिज्ञानामवधानम् अवश्यमाकृष्ट भवेदत्र । अस्मिन् विषये इतोऽन्यत्किमु वक्तव्यम् । अत्र कुलीनताया यथा लाभस्तथा हानिरप्यस्ति, तथा हि – भारतीयराजनीत्यनुसारेण शासनसभा-प्रवेशाधिकार कुलीनानामेवेति, अन्यै कदापि मन्त्रिपद न प्राप्य स्याद् अतोऽर्थवैषम्यरूपो दोषोऽत्र वर्तते इत्याक्षेप कैश्चित्क्रियेत । तस्य कारण तु भारतीय-राजनीतेरज्ञानमेव ।

अकुलीनानामपि मन्त्रिपद काङ्क्षन्तस्ते प्रष्टव्या शासनसभाप्रवेशो गुणानुरोधेन भवतामभीष्ट उत गुणहीनानामेवेति । तत्र गुणानुरोधेनेति अवश्य वक्तव्यम । यतो गुणहीनात् पुरुषान्मातापि पराङ्मुखी भवति, एव चान्येषा का वार्ता ? तदुक्त नीतिसारे—

> अलसस्याल्पतोषस्य निर्विद्यस्य कृतात्मन. ।
> प्रदानकाले भवति मातापि हि पराङ्मुखी ॥

इति । एतादृशानामन्यत्र चारितार्थ्यं सभवति शासनसभायामप्रवेशो राष्ट्रहितदृष्ट्या न दोषावह ।

किं च गुणवत्स्वपि उत्तम-मध्यमाधम-रूपेण त्रैविध्यमपरिहार्यमेव ।

# ब्राह्मणान्त्यजयोर्न वैषम्यं युक्तम् ।

तत्र ये खल्वधिकगुणवन्त उत्तम-श्रेणीस्थास्तेभ्य एव प्रथममवसरो देयः शासनसभायामिति के नाम नीतिज्ञा न मन्यन्ते ? एतेषु यदि कुलीनताया अपि उपलब्धि स्यात्तर्हि तेभ्य मन्त्रित्व-पद-दाने का वा आपत्ति ?

अत्रेदम् अवधातव्यम् । यन्निर्वाचने कुलीनताया एव न मुख्यत्वम् । यतस्तत्-तत्-पदोपयुक्त-कुलीनत्वस्य सत्त्वेऽपि यद्यन्येषामावश्यक-गुणानाम् अभावो दुर्गुणो वा यस्मिन्नस्ति स तत्रानधिकृत एव भवति, अत कुलीनतामात्रेण न काप्यसिद्धिरिति । गुणसपन्नाना तत्-तत्-पदयोग्याना कुलीनानाम् अलाभे तदन्य-कुलीनेभ्योऽपि परीक्षितेभ्य अब्राह्मणादध्ययनमापत्काले विधीयते । इति न्यायेन तन्मन्त्रि-पद-दान भारतीयार्थशास्त्रे विहितम् । तदुक्त कामन्दकेन ( ५ – ६ ) —

**गुणवत्तरैः सयुक्तान् प्रोन्नयेन्मध्यमाधमान् ।**
**महत्ता प्राप्नुवन्तस्ते वर्धयन्ति नरेश्वरम् ॥** — इति ।

उत्तमपदमारोपितेभ्यो मध्यमाधमकुलीनेभ्योऽपि गुणयुक्तेभ्यो वेतन तु तत्-पद-योग्य-कुलीनाना कृते यावद्विहित तावदेव देयम् । भारतीयराजनीत्यनुसारेण विभिन्न-जाति-पदद्वाना तत्तत्कार्याणा कृते तत्तज्जातीयैरेव निर्वाचिताना सर्वेषा मन्त्रिणा मदस्याना वाऽधिकारसाम्याद् वेतनसाम्यम् आवश्यकम् । तत्र ब्राह्मणान्त्यजयोन किंचिदर्थ-वैषम्यमधिकार-वैषम्य वा युक्तमिति । अतोऽनया व्यवस्थया भारतीय-राजनीतेरुपरि क्रियमाण आक्षेपो न कथमपि युक्तो भवितुमर्हति । पर तत्रैतावन्निर्बन्धोऽवश्य वर्तते, यद् विभिन्न-जातीयाना मन्त्रिणा भोजन-पान-विवाहादयो व्यवहारा तत्तज्जातीयपरम्परागतमर्यादाम् अनुसृत्यव आवश्यका, यतस्तेषा कुलशुद्धयाऽग्रेऽपि राष्ट्रकार्यार्थं गुणयुक्तानामेव प्रजानाम् उपलब्धि स्यादिति । तदुक्त कामन्दकेन —

" **उत्तमाभिजनोपेतान्न नीचैः सह वर्धयेत् ।** " —इति । उत्तमान् अभिजनयुक्तान् नीचैः सह न वर्धयेत तत्तुल्यमानान् न कुर्यादित्यर्थः. इति तद्व्याख्यायामुक्तम् । भोजनादिव्यवहारेषु तयोर्मिश्रण न युक्तमित्याशय.।

अत एव—

आहारेष्वथ योनौ च बीजे कर्मणि चापि य ।
शुचि कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः ॥

— इत्युक्तं कौटिलीयार्थशास्त्रे । अयमेव च राष्ट्रोपयुक्त-सत्पुत्र-निर्माणोपाय ।

प्रसङ्गवशादिदमपि वक्तव्यमापतति यत् आर्थिकसाम्यमिव सर्वेषां कुले कामसाम्यमपि यदीष्येत तर्हि कालत्रयेऽपि तस्यासंभव एव । तथापि तत्र प्रयासे क्रियमाणेऽनयोः सुन्दोपसुन्दवद् दशा भवेदिति ।

## काम-साम्ये सुन्दोपसुन्दवद् दशा भवेत् ।

महाभारते इयं कथा प्रसिद्धा । सुन्दोपसुन्द-नामानौ भ्रातरौ कस्यामपि परिस्थितावावाभ्यां परस्परं न योद्धव्यम् इति निश्चित्य अन्येभ्यो वधस्य शङ्कया च स मा भवतु—इति वरं ब्रह्मणस्तपस्याद्वारा प्राप्तवन्तौ । इत्थं त्रिलोक्यामप्यवध्यौ भूत्वा बहुकालं स्थितावपि कदाचित्तिलोत्तमां सुन्दरीं दृष्ट्वा कामातुरौ सन्तावन्योन्यमेव युद्ध्वा (?) मृताविति ।

सजातीयद्वारैव क्रियमाणायां स्थान-परीक्षायां प्रयोजनं तु सदस्योऽमात्यो वा तत्-तद्-देशाचारपरम्परां तदीय-व्यवहारादींश्च जानाति न वेति ज्ञानम् । तत्-तद्-देशाचारादिव्यवहारसंरक्षणं च राज्ञः कर्तव्यमेव । अनेनैव च जनतन्त्रस्यापि वास्तविकं रूपं सिद्ध्यति । यतोऽनेन कस्मिंश्चिद् बलात्कारप्रसङ्गो न भवेत् ।

एवमयं निरङ्कुशः साङ्कुशो वेति ज्ञानमपि राज्ञो जनतया वा आवश्यकं, येन स शीलादिभ्यो न विचलिष्यतीति ज्ञायते । तदपि सजातीय-द्वारैव भवितुम् अर्हति, यत उच्चपदस्थितेनापि भोजन-विवाह-व्यवहारस्तैः सह कर्तव्यो भवति, अतो जातीय-बन्धनं तेन सहसा न निवारयितुं शक्यम् । जातीयमर्यादोल्लङ्घने जाति-बहिष्कृतो भविष्यामि इति भयेनायम् उत्पथगामी न भवेत् । अथवा यत्किञ्चिदकार्यकरणादिना तत्सबन्धिभिस्तेन सह व्यवहारे औदासीन्ये स्वीकृते पुनस्तत्र प्रवृत्तिर्न भवेत

तस्य। तथा च जातीया एवाङ्कुशरूपा सन्त तम् अकार्यान्निवर्तयितु प्रभवन्ति नान्ये। अतो जातीय-मर्यादा-पालन नियन्त्रणदृष्ट्यात्यावश्यकम्। जातीयैरपि तस्य माङ्कुशत्व विज्ञायैव तद्विषये मतदान कर्तव्यम्। अन्यथा भारतीय-राजनीत्यनुसारेण अमात्येन यदि कश्चनापराधः क्रियेत, तर्हि तद्-दण्डभाक्त्व तज्जातीयानाम् अपि भवति। अयमेव विशेषो भारतीय-राजनीते।

* * * * * * * * * * * * * * * * * * * * * * * * * *

## शासनसंस्था-भयाभावेन सर्वत्र मात्स्य-न्यायः स्यात्।

* * * * * * * * * * * * * * * * * * * * * *

तथा हि-शासन-कार्यार्थं भारतीय-राजनीतौ प्राधान्येन अष्टादश विभागा निर्दिष्टा तेषु विभिन्न-कार्योद्देशेन विभिन्न-जातीय-मन्त्रिणो निर्वाचिता भवेयु। तत्रोदाहरणार्थं तत्रस्थ एको विषय प्रस्तूयते। भारतीय-राजनीत्यनुसारेण सुवर्णाध्यक्ष-निर्वाचन स्वर्णकार-जातीयैरेव कर्तव्यम्। केषाञ्चिद् आभूषण-निर्माणम् अभीष्ट चेत् तद्-विभागद्वारा कारयितु शक्य भवति। तत्र यदि सुवर्णचौर्यं न्यायालयत सिद्ध भवेत् तर्हि तद्दुत्तरदायित्व सुवर्णाध्यक्षस्यैवेति तद्-वेतनात् क्षति-पूर्ति राज्ञा कर्तव्या। वेतनापेक्षयाऽधिकक्षतौ तु तन्निर्वाचनकर्तृणा तज्जातीयानाम् उपरि दण्डो विधेय इति। एवम् एवान्यत्र ज्ञेयम्।

अतोऽनया रीत्या मतदानसमय एव उच्छृङ्खलस्य निर्वाचन यथा न भवेत् तथा तत्तज्जातीयैरवहितैर्भूयेत। किञ्चानया पद्धत्या योग्यरीत्या मतदाने प्रवृत्तिरपि जनताया जागृता स्यात्, अमात्योऽपि जातीयमर्यादा-पालनद्वारा जनताया स्वीयविश्वास-पात्रतायै सदा प्रयत्नशीलो भवेद् इत्ययम् एव जातीय-निर्वाचनान्महान् लाभ।

एव रीत्या विद्वन्मत, जातीय-मत, लोक-मत, प्रत्यक्षमनुमान चेति पञ्चभिरुपायैः परीक्षिता मन्त्रिण शासनसभा प्रविश्य शासन-कार्ये सपूर्णतया सहायका यदि भवेयुस्तर्ह्यवश्य गोरूपा इय पृथिवी वत्सरूपा-नीयाया जनताया कृते स्वय सपद्-धारा प्रवाहयिष्यतीत्यत्र नास्ति सन्दीति-लेशोऽपि। एतादृश-निर्दुष्ट-व्यवस्था भारतीय-राजनीतिम् अन्तरा अन्यत्र तु अत्यन्त दुर्लभैव।

अपराधानुसारेण दण्ड-व्यवस्था विधायापि लोकप्रियता-सम्पादन-पूर्वकं जनताया शासन-संस्थायाः पूज्यत्व-बुद्धिनिर्माणम् अतिदुष्करम्। दण्ड-व्यवस्थया अपराधिना सम्पत्तिहरणे वधदण्डे वा करणीये जनताया कोपस्य सम्भाव्यमानत्वात्। दण्डो यदि न दीयेत तर्हि शासनसंस्थाया एव अन्यथा-सिद्धत्वं भवेत्। शासन-संस्था-भयाभावेन च सर्वत्र मात्स्य-न्यायः प्रचलेत्। तदुक्तं कामन्दकेन—

"परस्परामिषतया जगतो भिन्नवर्त्मनः।
दण्डाभावे परिध्वंसी मात्स्यो न्यायः प्रवर्तते।" इति।

अतो दण्डविधानम् आवश्यकम्। भारतीय-व्यवस्थानुसारेण अन्य-जातीय-मन्त्रिणा तदनुगामिना च समर्थनं प्राप्य एकजातीयमन्त्रिणोऽपराधे तज्जातीयेऽपि दण्ड-विधानं सुशकं भवति। एतादृश-दण्ड-भयमेवान्येषु मन्त्रिषु तदनुयायि-वर्गेषु च सम्यङ्नीतिमार्गानुसरणे प्रवृत्तिम् उत्पादयेत्। जातिव्यवस्थामन्तरा सर्वसाधारणेन लोकमतेन निर्वाचितस्य मन्त्रिणोऽपराधे यदि सर्वेषां मतदातृणामुपरि दण्ड-विधान-प्रसङ्गः स्यात्तर्हि अवश्यं जनताया कोपपात्रीभूय शासन-संस्था न बहुकालं स्थितिं लभेत। अत एवोक्तं कामन्दकेन—

"उद्वेजयति तीक्ष्णेन मृदुना परिभूयते।
दण्डेन नृपतिस्तस्माद् युक्तदण्डः प्रशस्यते॥" इति।

अयमर्थः — यादृशो दण्डो लोकविद्वेषजनको यादृशश्च शासनसंस्थाया एव व्यर्थतां सम्पादयेत् तदुभयस्मादिन्नः सुप्रयुक्तो दण्ड एव प्रशस्त इति। वर्तमान-पाश्चात्य-नीतौ तु मन्त्रिणा महत्यपराधे कृतेऽपि शासनसंस्था तत्क्षेत्रीयेभ्यः सर्वेभ्यो मतदातृभ्यो दण्ड-दाने साहसं कर्तुं न पारयेत। निर्वाचने जाति-नियमाभावेन च जनताया सविधं येन मन्त्री निगृहीतः स्यात् तादृशम् अङ्कुशरूपं जातिनियमनमपि नास्ति। एतस्य दुष्परिणाम अयमेव यन्मन्त्रिभिर्निर्भयतया प्राप्ताधिकारस्य पदस्य च दुरुपयोगः क्रियते। विशेषतः सौजन्यस्यापि विस्मरणं तेषां भवति। एतद्-दोषस्य निवारणोपायः कोऽपि जातीय-मर्यादाया उच्छेदिकाया वर्तमान-राजनीतौ नास्ति।

## निर्दोषा भारतीया निर्वाचन-शैली ।

एतावता प्रत्यक्ष-परोक्षानुमान-रूप-प्रमाण-त्रयेण भारतीय-निर्वाचनशैल्या निर्दोषत्वं प्रतिपादितम् ।

साम्प्रतं शासन-कार्यार्थं राष्ट्रे सदा गुणिना सौलभ्यं कथं भवेत् ? कथं च गुणिनामेव परंपरा उत्तरोत्तरं वर्धेतेति विचार्यते ।

प्रायोऽधुना सर्वेषामेव नीतिज्ञानां बुद्धिरस्मिन् विषये सल्लग्ना वर्तते । परम् अद्यापि परिणाम-सुखदः सुलभो मार्गो नोपस्थितः ।

विषयेऽस्मिन् भारतीय-राजनीत्या निर्दिष्ट उपायः सुसंगत परिपूर्णश्चेत्यग्रिम-विवेचनेन स्पष्टं भवेत् । तत्र तेषां तेषां प्राक्तन-संस्कारानुरूपेणैव गुण-वर्धनोपाय विभिन्न-संस्काराणां सङ्करो मा भूदिति तन्निवारणोपायश्चोपदिष्टो वर्तते ।

शासनसंस्थाया मुख्यं प्रयोजनं प्रजानां धर्मार्थ-काम-समृद्धि-संपादनम् एव । तच्च गुणातिशयवतां सहयोगेनैव संभाव्येत । अतस्तद्द्वारा राष्ट्रे अपेक्षितानां ज्ञान-सुरक्षा-वाणिज्य-शिल्पादीनां व्यवस्था कर्तव्या भवेत् । अपेक्षित-सर्वविध-कार्योद्देशेन शासन-संस्थयैव वेतनादि-व्यवस्थायाः संपादनम् अशक्यम् एव । तादृश-व्यवस्थाया सम्भवेऽपि वेतन-द्वारा देश-कार्य-संपादन-दृष्टिरेव प्रथमतोऽसङ्गता । यतो हि कस्मिन्नपि कार्ये यावन्मनुष्यः स्वकर्तव्यबुद्धया सोत्साहं स्थिरतया न लगति, तावत्तत्र गुणानां विकासोऽसंभवी । किंच वेतनमात्रं लक्ष्यीकृत्य प्रवर्तमानो न कदापि कार्यकरणे परिश्रमं सहेत । द्रव्यसंपादनशीलश्च मनुष्यो यत्राधिक-वेतन-लाभसंभावना स्यात्तत्रैव प्रवर्तमानः कदाप्येकत्र स्थिरो न भवेत् ।

## गुणानुरोधेन विना न सत्क्रिया ।

भारतीयेतिहासतोऽवगम्यते, यद् येन यावन्मात्रया राष्ट्रकार्ये स्वकीय गुण-वैशिष्ट्यं प्रदर्श्यते, तावन्मात्रया तदीय-व्ययानुसारेण च शासनसंस्थया तस्य पुरस्कारः समाननरूपेण कर्तव्यो न तु वेतनरूपेणेति ।

अत एवोक्तं भारविना जनानुराग-सपादक-दुर्योधन-कार्य-वर्णन-प्रसङ्गे किरातार्जुनीये—
" प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया "—इति ।

## धर्मो नारायणः स्वयम् ।

मानवसमाजेऽस्मिन् वर्गद्वयं दरीदृश्यते । तत्रैकोऽर्थप्राधान्येन स्वकीयगुणोत्कर्षविधाने संलग्नः । अपरश्च केवलं देशहितदृष्ट्या स्वकर्तव्यपरः । अत्रैव वर्गे भारतीय-राजनीतेर्निर्भरः । अत एव कर्तव्यबुद्धि-प्रयुक्त-गुणोत्कर्षानुसारेण राज्ञा प्रजाना समादरः कर्तव्य इति तत्रोक्तम् । अतो वैतनमात्रस्य लक्ष्यता-सपादिकाया पाश्चात्यनीतेरपेक्षयैव नीतिरयमत्र-समीचीनेत्यवश्य वक्तुम् आयाति । एतादृश-व्यवस्थाया प्रचारार्थमेतदतिक्रमणकारिभ्यो दण्डविधानमन्तराऽयत्र किंचिच्छासनसस्थाया कार्यं वर्तते । तदुक्त कामन्दकेन—

" सर्वस्यास्य यथान्याय भूपतिः संप्रवर्तकः । " इति ।

एतादृश्या कर्तव्याधिष्ठिताया व्यवस्थाया वेदाज्ञारूपेण ग्रहणे सति धर्म-रूपता, अस्या एव लोकहितोद्देशेन देशसेवा-दृष्ट्या ग्रहणे नीति-रूपता च भवतीति पूर्वमुक्तमेव । एतादृशधर्मनीत्योरस्य मुख्य प्रयोजनम् । यतस्तदुच्छेद एव देशपराभवहेतु । तदुक्त " यदा यदा हि धर्मस्य " इति गीताश्लोकव्याख्यानावसरे सच्छिरोमणिना ज्ञानेश्वरेण—

" अधर्माची अवधि तोडीं । दोषाची लिहली फाडीं ।
सज्जना करवी गुढी । सुखाची उभवी ।
दैत्यांची कुळे नाशीं । साधूचा मान निवसी ।
धर्मासी नीतिशीं शेज भरीं " इति ।

अत्रान्तिमवाक्यस्य पूर्वोक्त एवार्थो विवक्षित । यतो हि लक्ष्मीसहस्रनामावल्या नीतेरपि निर्देशोऽस्ति । " धर्मो नारायणः स्वयम् । " इति तु प्रसिद्धमेव । अत्र नीति-धर्म-रूपयोर् लक्ष्मीनारायणयोरेकत्र शय्याया प्रतिष्ठापन प्रयोजनमुक्तमवतारस्य । तस्य तात्पर्यमिदमेव, यत् वैदिक-विधि-बोधितानि लौकिक-पारलौकिकोभयविध-श्रेय.साधनानि

कर्माणि प्रमाणत्रयेणादौ तथात्वेन निश्चित्य लोकसेवा-दृष्टया कर्तव्य-बुद्ध्या चानुष्ठानव्यानीति । ए तादृश-कर्तव्य-भावनया ज्ञान-सुरक्षादि-कार्य-कर्तॄणा सग्रह समादरश्च शासनसस्थया प्रथम कर्तव्य, तद्-दर्शनेन लोकेऽपि तादृश-गुण-सपादने प्रवृत्ति स्यादिति । गुणातिशयवता सग्रहस्य सुलभो मार्गो भारतीय-राजनीतौ निर्दिष्ट ।

## गुणिलाभार्थम् एव चातुर्वर्ण्य-व्यवस्था ।

ज्ञान-सुरक्षा-वाणिज्य-शिल्पादि-विशिष्ट-कार्यार्थं विभिन्नाना गुणिना सग्रह आवश्यक, एकस्य सर्व-कार्य-करणे सामर्थ्याविति पाश्चात्यनीत्याऽपि स्वीक्रियते । तत्रैकैक-श्रेणीस्थाना स्व-स्व-कार्ये श्रेष्ठ-गुण-सपादने सल्लग्नाना कृतेऽन्यश्रेणीस्थाना कार्यकरणेऽवसर एव नाव-शिष्यते । अतस्तत्र विभिन्न-कार्यानुसारेण विभिन्न-श्रेणी-विभागो न्याय्य एव । तादृश-श्रेणीषु यदि जन्मनैव तत्तदुपयुक्ता सस्कारा उपलभ्यन्ते, तर्हि तद्बाधके कर्मणि शासन-सस्थया कदापि न प्रवर्तितव्य देशहित-दृष्ट्या । तदुक्त भारविना —

"प्रकृति खलु सा महीयस सहते नान्यसमुन्नति यया।" इति ।

अस्याभिप्रायस्तु — स्वभावसिद्धस्यैव कर्मण सफलता निश्चितेति । अत एव सेना-गुण-निरूपण-प्रसङ्गे कामन्दकेनाप्युक्तम् —

"अर्द्धेय क्षत्रियप्रायो दण्डो दण्डविदा मत" इति ।

अत्र क्षत्रिय-प्राय-शब्दव्याख्याय टीकायाम् एव वर्णित — "क्षत्रियाणा युद्धोपयुक्तत्वाद् इतरेषा तत्सपर्काद् उत्साहो भवति" इति । किंच प्रकृति-सिद्ध-शोभन-चमत्कारवत् त्वेवापत्कालेऽपि स्थिरतायाः सभव इति तु प्रागुक्तमेव । एतादृश-गुणि-लाभार्थमेव भारतीय-राजनीतौ चातुर्वर्ण्य-व्यवस्था विशेषतो वर्णिता ।

अस्या एव व्यवस्थाया परिणामो यद् अद्यापि भारतीयेषु जन्म-प्रभृत्येव तादृश-सस्कारा दृश्यन्ते । इतिहासेन इदमपि ज्ञायते, यद् रामार्जुनादि-वीराणा स्वभावत एव —

"आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा।"

—इत्यादीनि वचनान्यागन्, एवं सेनापति-पद-स्थितेन परशुरामेण महामन्त्रिपदे स्थितेन चाणक्येन च कदापि ज्ञानादि-रूप स्वकर्तव्य न विस्मृतम्। सपूर्णस्याधिकारस्य सत्त्वेऽपि स्वयं पर्णकुटी-सेवन न परित्यक्त ताभ्यामिति च।

चन्द्रगुप्त-मन्त्रिणश्चाणक्यस्यापि जीवन दृश्यताम्। सपूर्णस्य नन्दराज्यस्य स्वायत्तीकरणानन्तर तद्राज्यमेव गुणातिशयवते चन्द्रगुप्ताय राज्य प्रदत्त तेन। किंच नन्दामात्यस्य राक्षसस्य प्रज्ञा-भक्ति-पराक्रमादीन् गुणान् सल्लक्ष्यामात्यपदे तमेव नियुज्य स्वयं ज्ञानरूपाया राष्ट्रसेवाया कृते सर्वस्व-त्याग-पूर्वक वने पर्णकुटी-सेवनमेव कृतम्। तत्र चार्थशास्त्र प विश्ववन्द्यम् अमूल्य ग्रन्थरत्न निर्माय तद्वारा यथार्थ-नीति-प्रकाशने भ्रान्ति-तिमिर दूरीकृत जगत। कुलीनतया परपरागत-सस्कारस्यैवेद फलम्। अन्यथैतादृश-त्यागस्य कथमन्यत सभव? अत्यन्तम् अर्वाचीन इतिहासे समर्थ-रामदासस्य वर्तते। सोऽपि शिवाजी-महोदयस्य राजोपयुक्त-गुणान् परीक्ष्य तमेव राज्ये अभिषेचयामास। अनन्तर स्वयं निःस्पृहो ज्ञानसेवायाम् एव तत्पर आसीत्। तत्-तपस्या-फल-रूपो दासबोध-ग्रन्थोऽद्यापि मानव-समाजाय ज्ञानरूप प्रकाश वितरतीति।

एवमेव परपरागत-सस्कारानुप्राणितेन वैश्यवर्गेणापि देशान्तरे भ्रमण विधाय राष्ट्रेऽपेक्षिताना सर्वेषा वस्तूना सचय कृत। पशु-सरक्षणद्वारा देशे दधि-दुग्धादि-सपन्नतापि सपादिता। तथापि तस्य लाभाय शास्त्रनियन्त्रित एवासीत्। तद्वारा सचितस्यापि धनस्य विनियोगो निःस्वार्थ-भावेन राष्ट्रहितार्थमेव कृतस्तेन। अत्र विषये राणा-प्रताप-कालीनानां भामाशाह-प्रभृतीना नामोल्लेख कर्तुं शक्य।

एव तादृश-सस्कार-युक्तेन शूद्र-वर्गेणापि शिल्पादि-कला-द्वारा भारतवर्षस्य शोभा सवर्धिता, यस्या अवशेष दृष्ट्वाऽद्यापि विश्वमेवात्यन्त चकित भवति। एतद्-वर्गीय-कृषि-कौशलेनैव च भारते सर्वदाऽन्नसौकर्यम् आसीत्।

अत्रायमेव विशेषो यत्—तत्-तच्छ्रेणीस्थे स्वस्वकर्मणि त्याग-श्रम-कष्ट-सहिष्णुतादीनाम् आवश्यकताया सत्यामपि न कदापि क्लेशोऽ-

नुभूतं किंतु नवोत्साहं सतोषश्चैवानुभूतौ । अत एव तादृशातीतकालस्य स्मरणमद्यापि **स्वर्णयुग**-रूपेण क्रियते लोकै । तदानीतनै राजभिरपि जन्मसिद्ध-संस्कारवत्सु जनेषु गुण-संवर्धने प्रतिबन्धकानां विलासित्वादि-दुर्गुणानां प्रवेशो यथा न स्यात् तथा प्रयत्यते स्म । एतादृगमूलसंस्कारानुसारेण इदानीमपि तादृश-व्यवस्थायाः संपादनं न दुष्करम् ।

एतादृशी सुव्यवस्था पाश्चात्य-नीतौ दुर्लभैव । तत्र तु राष्ट्रहितोपयोगिषु मुख्यतमेषु कार्येष्वपि सर्वेषां यथेच्छं व्यवहारेऽनिर्बन्धो वर्तते । अत एव समयानुसारेणोत्पद्यमानैर्नूतनैः संस्कारैर्लोकानां परंपरागत-प्राचीनसंस्कारास्त्वभिभूयन्ते, अस्थिरतया तेषामपि प्राबल्यं न भवतीति वस्तुस्थितिः । तस्य परिणामोऽयमेव, यत् विषम-प्रसङ्गे तेषां निष्फलता, शमदमोत्साहादि-गुणहीनता च । अत एतादृशानिश्चित-फलक-पाश्चात्य-नीत्यनुसरणेन लोके सुख शान्त्यादि-निर्माणं तु कालत्रयेऽप्यसंभवि ।

## उत्पथगामिनी पाश्चात्य-राजनीतिः ।

पाश्चात्यराजनीतिरेव भारतीयानामुत्पथ-गमने हेतुः । यतो हि यस्याः लोक-हित-साधनत्वं भारतीय-राजनीति-शास्त्रे वर्णितं सहजतो गुणोत्कर्ष-संपादिकायास्तस्याः जाति-व्यवस्थायाः समूलोन्मूलनेनेदानीं सर्वत्र विलासितादि-दुर्गुणानां प्राधान्यं संवृत्तम् । परंपरागतायाः लोक-सेवाभावनाया अपि मूलोच्छेदो जातः । ग्रामेषु सदा देवतावत् पूजनीयैरतिथिभिरधुना सर्वत्रार्धचन्द्रः प्राप्यते यादृश-मार्गानुसरणेन मोरध्वजस्य राज्ञो गृहे चौर्यनिमित्तागतैश्चोरैरपि राज्ञा साधूनामिव कृतः सत्कारः प्राप्य स्वयमपि साधुता प्राप्ताऽऽसीत् तादृशो मार्ग एव साम्प्रतं प्रतिरुद्धो वर्तते । शास्त्र-पराङ्मुखतया केवलबुद्धिवादपुरस्करणेन च स्वाभिमान-शून्यायां जनतायाम् उच्चनीचभावकल्पनायाः प्रवेशेन सर्वत्र नैतिकपतनोन्मुखता दरीदृश्यते । मानापमान-शङ्कायाः अवसरदानमेव तावन्नोत्कर्ष-विधायकं भारतीय-राजनीति-संमतं वा ।

समानत्वं तु प्रत्येकमावश्यकम् । परं तदेव किमनुरोधेन केन कस्य क्रियते ? इति सम्यग्विचार्यमाणे भारतीयराजनीतेर्यथार्थं स्वरूपं ज्ञायेत ।

वस्तुतो लोकसेवाया लोकहितस्य च भावना यस्या व्यक्ते श्रेण्या वा हृदये जार्गात, तस्या मनसि मान-समानकल्पनापि नायातीति सिद्धान्त । गुणिभि क्रियमाणाया लोकसेवाया कृते तेषा समानो राष्ट्रेणैव क्रियते । एतादृश-लोकसेवाया शिक्षणार्थमेव भारतीय-राजनीतावाश्रम-व्यवस्था विहिता । तत्र शूद्रजाते स्वय सेवापरायणतया तद्विषये न किमपि वक्त-

* * * * * * * * * * * * * * * * * * * * * * * *

## आश्रम-व्यवस्था लोकसेवा-शिक्षणार्थम् एव ।

* * * * * * * * * * * * * * * * * * * * * * * * * *

व्यम् अवशिष्यते । त्रैवर्णिकेभ्यस्तूपनयनसस्कारेण सहैव प्रथम सेवाया शिक्षा दीयते । तेषा ज्ञानप्राप्तिरपि गुरुशुश्रूषा-द्वारैव भवति । गुरुणापि विद्यार्थिषु विनय दृष्ट्वैव विद्या दीयते । एव रीत्या ब्रह्मचर्याश्रम एव सपादित सेवासस्कारोऽग्रे अपि राष्ट्रहितसाधको भवति । कि च शिक्षणकाल एव वास्तविक-सुख-प्राप्त्युपायास्तेभ्य प्रदर्श्यन्ते । येन तेषा जीवने कदापि क्षुद्राया स्वार्थपरायणताया विषयलोलुपतायाश्च ससर्गो न भवेदिति । तत्राध्यात्मिकताया परिचयोऽपि विशेषत महायको भवति । स एव च जीवनस्य अन्तिम-समये तान् वैराग्य-युक्तान् ईश्वरभक्तांश्च विधाय परम-शान्तिमये आनन्द-सागरे निमज्जयति । भारतीयराजनीतेर्लक्ष्य-भूताया शान्तेश्चरमसीमा एतावत्-पर्यन्त वर्तते । एतादृश-शान्ति प्रत्यव सर्वेषामाकर्षण पूर्वम् आसीत् ।

वर्णाश्रमिभि क्रियमाणाया लोकसेवाया कृते प्रत्युपकाररूपेण तेषा समानो राष्ट्रेण यदि क्रियेत तर्हि स कैश्चिच्छिर शूल कुतो जनयतीति न ज्ञायते । राष्ट्रसेविना समानन तु राष्ट्रेण क्रियमाण मनोविज्ञान-दृष्ट्या स्वाभाविकमेव । यतो हि प्रेमपूर्वक ये खलु राष्ट्रसेवाकार्ये मग्ना भवन्ति, तेषु राष्ट्रस्य विश्वासश्चित्तसतोषश्चावश्यम्भाविनौ । अतस्तेषाम् आदरो मित्रत्व-भावनया राष्ट्रेण क्रियतैव । एतादृशो दास्य-सख्ययो कार्यकारण-भाव-नियम पूर्व स्थिरसधि-विचारावसरे उक्त एव ।

अथोक्तनियममनुसृत्य विभिन्न-श्रेणीस्थै क्रियमाणा राष्ट्र-सेवा कीदृशी ? तत्समाननमपि राष्ट्रेण कथ क्रियते ? इत्यय विचार प्रस्तूयते ।

तत्रानुवंशिकगुणोत्कर्षसहितेन शूद्रवर्गेण या राष्ट्रसेवा क्रियते, तदर्थं सपूर्णंन्यायस्य साधनभूतं शिल्पकलादि-क्षेत्रमेव तस्मै पुरस्काररूपेण स्वतन्त्रतया राष्ट्रेण प्रदत्तं वर्तते। किं च अन्यवर्गीयाणां विवाहादि-प्रसंगेषु तस्मै यत्नपूर्वकं साहाय्य-प्रदानस्य भावना अद्यापि दृश्यते। एतादृशं शूद्राणां सम्मानं दृष्ट्वा तमसहमानैः कैश्चिदसूयया यदि शूद्रेषु राष्ट्रविषये विपरीत-भावना उत्पाद्यते नर्हि ते कथं दयनीयानां शूद्राणां हितैषिणो भवितुमर्हन्तीति विवेकिन एवावधारयन्तु।

एवमेव राष्ट्रेऽपेक्षितानां वस्तूनां विदेशतो विनिमयादिना संग्रहो वैश्यानामानुवंशिकं कार्यम्। तद्द्वारा, तत्र तत्रान्नसत्र-धर्मशाला-विद्यालय-देवमन्दिर-तडाग-चिकित्सालयादीनां देशोपयोगिनां निर्मापणेन च राष्ट्रसेवा एतद्वर्गेण क्रियते। तस्याः कृते राष्ट्रेणापि पितृतुल्यतया सम्माननम् अस्य क्रियते। एतदेवानुमोद्यते धर्मशास्त्रेणापि। यथा—

"अन्नदाता भयत्राता यश्च विद्यां प्रयच्छति।
जनिता चोपनेता च पञ्चैते पितरः स्मृताः॥"—इति।

## अन्तःकलहः पाश्चात्त्य-कूटनीति-परिणामः

राष्ट्रस्वभावानुरोधेन जायमानं वैश्यानां सम्मानं दृष्ट्वा यदि केषाञ्चन मनस्यन्तर्दाहो भवेत्, तत्र च नैर्यंविः भेदनीतिद्वारा राष्ट्रेऽन्तःकलहो निर्मीयेत, तर्ह्ययं पाश्चात्त्यकूटनीतेः परिणाम एव इत्यतोऽन्यत्किमु वक्तव्यम्?

एवं क्षत्रिय-वर्गोऽपि स्वीयानुवंशिक-गुणोत्कर्षद्वारा राष्ट्र-रक्षार्थं स्वप्राणदानेऽपि सदा सन्नद्धस्तिष्ठति। तस्यैव जागरणेन संपूर्णं राष्ट्रं सुखेन स्वपिति। अत एतादृशामूल्यसेवायाः पुरस्काररूपेण राष्ट्रं कोश-समर्पणपूर्वकं तस्मै राजसिंहासनं प्रदाय स्वयमानन्दमनुभवति। तद् दृष्ट्वा यदि कैश्चिदसूयया तद्विरुद्धं प्रचारः क्रियेत, तर्ह्ययं राष्ट्रद्रोह एवेत्यवश्यं वक्तव्यमापतति।

ब्राह्मणवर्गस्यापि सेवाकार्यं कीदृशम् इति दृश्यताम्। स खलु

विषमतम-प्रसङ्गेष्वपि सात्त्विकनाया अपरित्यागपूर्वक विद्यासागरे संपूर्णतया स्वय निमज्ज्य सप्राप्त ज्ञानरत्न जनतार्थे समर्पयति । एतादृशी अमूल्या राष्ट्रसेवाऽर्जन अर्थप्राप्तिसाधनभूता अन्याः सर्वा वृत्तीः परित्यज्याप्यविच्छिन्नरूपेण सतत प्रचाल्यते । अनस्तत्पुरस्कारपूर्वक केवल विनयेन नम्रमस्कारपूर्वक तस्योपदेशो राष्ट्रेण शिरसा धार्यते—

' शिष्यस्तेऽह शाधि मा त्वा प्रपन्नम् । "

इत्येतादृशवचनद्वारा स्वस्य विनीनना प्रकाश्यते च ।

* * * * * * * * * * * * * * * * * * * * * * * * *

## सेवा-श्रेणी-सापेक्ष संमाननम् ।

* * * * * * * * * * * * * * * * * * * * * * * * *

एव रीत्या राष्ट्रसेवका यतो राष्ट्रेणैव चित्तसतोषत समानिता भवन्ति, न तु तद्-याञ्चानुसारेण, तनन्त्रोञ्चनीच-भावनाया उत्पाद प्रचारश्च क्रियमाण केवल हास्यास्पदमेव भवितुमर्हति । यया श्रेण्या राष्ट्रस्य यादृशी सेवा क्रियते, तादृशमेव समानन तया प्राप्यते । अत्र उदाहरणमिदमेव यत्—

"शरीरे बलाधानार्थं हि जनैराहारो भुज्यते । प्रथम सर्वोऽप्याहार उदर गच्छति । तत सत्त्वशीलैरिन्द्रियै स्वकार्यानुसारेण तदीय सत्त्वाश एवाकृष्यते । एवमेवान्यैरप्यवयवै स्वस्वकार्यानुरोधेन अवशिष्टभागाकर्षणपूर्वक पोषण प्राप्यते । तत्र यथेन्द्रियादीना न कोऽप्यपराध, न वा तेषु कस्यापि महत्त्व हीयते, तथैव राष्ट्रस्यापि-स्थितिर्ज्ञेया । राष्ट्रमप्येक शरीर तदन्तर्गता सर्वा श्रेणयस्तदवयवा अत (?) सर्वासा पृथक् प्रयोजनमावश्यकत्व च वर्तते । तत्र यथा शिरस कर्तव्य पादस्य तत्कर्तव्ये वा शिरस आक्रमण निष्फल भवति, तथैव भारतीय-राजनीत्युपयुक्त-गुणोत्कर्ष-मूलिकासु पूर्वोक्त-श्रेणीष्वपि इति, तत्र कश्चनाक्षेपो विक्षेप एव स्यात् ।

एतादृश्या निर्दुष्टायाश्चातुर्वर्ण्य-व्यवस्थाया उपरि साप्रत या समन्तत आपत्तिरापतिता, तस्या मूल-कारण तु अस्माकमेवाव्यवस्था । यतो हि पूर्वोक्त-लौकसेवा-भावना परित्यज्य अद्यत्वे यस्य मनसि यदेवा-

याति तत्कार्यकरणे सर्वेषां प्रवृत्ति समुत्पन्ना। नवीन-कार्याणां संस्कारस्तु तेषु नास्ति। अतस्तत्र साफल्यं न लभ्यते। संकटावस्थायां प्राप्तायां अधीरा सन्त स्वकीयमुत्तरदायित्वमन्यस्योपरि पातयितुं सर्वे प्रवृत्ता भवन्ति। राष्ट्रसेवाकरणे असामर्थ्येऽपि समानापेक्षा तु एषु प्रत्यहं वर्धत एव।

अत एवेयमापत्तिरायाति। परं तत्र पूर्वोक्तरीत्या गुणोत्कर्षार्थम् उक्तव्यवस्था-विधायिकाया भारतीयराजनीतेर्न कोऽपि दोषोऽस्ति।

## पाश्चात्यनीतिस्तु सर्वनाश-हेतुः।

भारतीयराजनीतेरयं सिद्धान्तोऽवश्यमवगन्तव्यो यद् अत्र यदि भारतीयराजनीत्यनुसारेण शासनव्यवस्था न सचाल्येत, लोकश्च परपरागतो गुणोत्कर्षसाधको मार्गो नावलम्ब्येत तर्हि राष्ट्रे कस्यापि नियमस्य असत्त्वे सुचारुरूपेण न कापि व्यवस्था प्रचलिष्यति। तद्विपरीता पाश्चात्यनीतिस्तु सर्वथा विफला सती अन्ते सर्वनाशहेतुर्भविष्यतीति। तदुक्तं सक्षेपतः कामन्दकेन —

"स्ववर्णाश्रमधर्मोऽयं सर्वेषां वर्णलिङ्गिनाम्।

अस्याभावे तु लोकोऽयं सकराग्नाशमाप्नुयात्॥" इति।

अथ भारतीयराजनीतेश्चतुर्थं वैशिष्ट्यं यस्माद्राज्यस्य प्राणभूताद्वैदिकेतरनीत्यन्तरेष्वदृश्यमानात् सत्त्वगुणाद् भवति पूर्वसूचितस्य तस्य विषये किंचिन्निरूप्यते।

शासनकार्येष्वेतादृश-सत्त्व-गुणस्य अभिवृद्धयर्थम् एव भारतीयराजनीतौ शब्दप्रमाणस्यापि समन्वय इष्टः। राजशासनसंस्था वा न स्वतन्त्रं वस्तु किन्तु राज्यस्याङ्गमेव। तस्य कार्यम् इदमेव यद् गुणिना सग्रहपूर्वकं राज्ययन्त्र-सचालनम्। यथा पादादि-मस्तकान्तावयव-समुदायस्य शरीरसज्ञा भवति तथा स्वस्वगुणसम्पन्नस्वाम्यादिसप्ताङ्गसमुदायस्यैव राज्यमिति सज्ञा वर्तते। तदुक्तं कामन्दकेन —

* * * * * * * * * * * * * * * * * * * * * * * * *

## क्रियासिद्धिः सत्त्वे नोपकरणे।

* * * * * * * * * * * * * * * * * * * * * * * * *

**"स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।**
**एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम्॥"** इति।

अस्यार्थो जयमङ्गलायामेवं वर्णितः "राज्यं राजेत्यभिधान-प्रत्यययोः प्रवृत्तिनिमित्तं तच्च स्वस्वसंपदुपेतं प्रकृतिसप्तकमेव भवितु-मर्हति" इति। सत्त्वं बुद्धिश्चेति द्वयमेव सर्वेषु राज्याङ्गेष्वेकसूत्रता-निर्माणपुरःसरं सर्वेषां संरक्षणे हेतुरिति 'सत्त्व-बुद्धि-व्यपाश्रयम्' इत्यस्य तात्पर्यम्।

अत एवोक्तम् –"**क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे।**"– इति सत्त्वस्य महिमा नल-राम-युधिष्ठिरादिभिः स्वचरित्रद्वारा प्रका-शितः। यद्यपि सत्त्वस्य चर्चा पूर्वनिर्वचनपद्धतिनिरूपणावसरे संक्षेपतः कृता, तथापीदानीं विशेषतस्तन्निरूपणमारभ्यते।

आचार्याभिनवगुप्तपादैः प्रत्यभिज्ञा-दर्शन-ग्रन्थे सत्त्वस्य निरूपणमेवं कृतमस्ति —

**"स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च सा।**
**माया तृतीये ते एव पशोः सत्त्वं रजस्तमः॥"** इति।

• • • • • • • • • • • • • • • • • • • • • • •

## स्वातन्त्र्यमेव कर्तृत्वम्।

• • • • • • • • • • • • • • • • • • • • • • •

अस्यार्थः, भगवतः सर्वविषयक-ज्ञान-क्रिया माया-शक्तय एव क्रमेण तदंशभूते जीवे सत्त्वरजस्तमोगुणरूपा भवन्तीति। अयं भावः तादृश-ज्ञानरूप-सत्त्वांशेनैव कर्तृत्वसंपन्नो जीवः कस्मिन्नपि कार्ये आफलसिद्धि प्रयत्नं विधाय विश्रान्तिं लभते इति। ईश्वरनिष्ठं पूर्णं कर्तृत्वमेवांशतो जीवेऽभिव्यक्तं भवति। तद्बलात् सः स्वकार्ये एवान्यान् सर्वानावर्जयितुं सदा प्रयतते न त्वन्याधीनतां वाञ्छति। अस्य ज्ञानेच्छा-क्रियाशक्तीनां लाभोऽपि तत एव। कर्तृत्वं च स्वातन्त्र्यमेव। अत एव "**स्वतन्त्रः कर्ता**" इति सूत्रे पाणिनिनाऽनयोः पर्यायित्वं निर्दिष्टम्। स्वातन्त्र्यं च "**स्वेतर-सकलकारकाप्रयोज्यत्वे सति इतरकारकचक्र-प्रयोक्तृत्वम्**" इति निबन्ध-

कार्य्याख्यानम् । ईश्वरोऽपि ज्ञानेच्छाकृतीना समष्टिरूपत्वेनोपादान-गोचरापरोक्षज्ञान-चिकीर्षाकृतिमत्त्वरूपात् तादृश-कर्तृत्वादभिन्न एव । शक्ति-शक्तिमतोरभेदात् । पत्युर्ज्ञानमिति च राहोः शिर इतिवत् कल्पितभेदेन व्यवहारात् । अत्रेद विचारणीय यत् परिश्रमेण श्रान्तो जीवो यदा विश्रान्तिलाभार्थ स्वपिति तदा तदन्नानावस्थायामपि भुक्तस्यान्नस्य पाचन, तन्निमित्तानामचेतनाना रसरक्तादीना शरीरे ओचित्येन सचारश्च केन कार्यते ? इति । निद्रामग्नस्य जीवस्य निष्क्रियत्वात् तदधीन तत्कार्य न भवितुमर्हति । अतोऽवश्य वक्तव्यम् आयाति, यत् केनापि जागरूकेण कर्तृत्वशक्तिमता चेतनेन तत्कार्यं सचाल्यते इति । स एव साक्षी स्वतन्त्र परमेश्वर । अयमेव सिद्धान्तो भागवतेऽपि प्रतिपादित ।

"योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्ताम्
सञ्जीवयत्यखिल-शक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्त-चरण-श्रवण-त्वगादीन्
प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥" इति

'स्वातन्त्र्यमेव चैतन्य, पारतन्त्र्यमेव जडता' इति आधुनिकानाम् अपि समतम् । अतः पर्यायान्तरेण तैरपि चेतन परमेश्वरोऽङ्गीक्रियत एव ।

एतावता सक्षेपेणेश्वरस्यास्तित्व समाप्य तादृशेश्वरजीवयोः अन्योन्यसबन्धविषये किंचिदुच्यते, येनेश्वरीय-ज्ञानशक्तेरेव प्रतिबिम्ब-रूपता जीवावस्थाया सत्त्वगुणस्येति साधु ज्ञायेत ।

यस्माज्जीवस्य निद्रावस्थाया परमेश्वर एव जागरूक सन् शरीर-पोषणादि-कार्यं करोतीति सिद्ध्यति, तत एव जागृदवस्थायामपि सर्वेषु तत्कार्येषु परमात्मन कर्तृत्वमभिव्यज्यते इति सिद्ध भवति ।

किं च निद्रान्त उत्थानानन्तर 'सुखमहमस्वाप्स न किंचिद् अवेदिषम्' इति स्मरण, "योऽहमस्वाप्स स एवेदानीं तत्स्मरामि।" इति प्रत्यभिज्ञा चेतिद्वय सर्वानुभवसिद्धम् । अतो जीवोऽपि तादृश-परमेश्वर एव नान्य इत्यपि सुव्यक्त सिद्ध्यति । अनुभव-स्मरणयो सामानाधि-करण्य-नियमात् ।

एकोऽपि सूर्यो यथाऽनेकेषु दर्पणेषु प्रतिबिम्बित सन्ननेकवद् भासते तद्वदेव सर्वशक्तिमान् परमेश्वर एकोऽपि मायावशाद् उपाधिभेदेन जीव-

## कर्तृत्वं विना ज्ञानव्यवहारः निरर्थकः।

रूपेण नानात्व भजते। तस्य कारण तु "एकोऽहं बहु स्यां प्रजायेय।" इत्याकारिका तस्येच्छैव। वेदान्त-साहित्यादि-दर्शन-समत सिद्धान्तोऽय यथार्थ एव न तु कल्पनामात्रम। दर्पणस्थानापन्नया मायया एवाविर्भावेत्यपर नाम। स्वीय-विक्षेप-शक्त्या एकस्यानेकवद्भानमात् सा अविद्येत्युच्यते मैव च सर्वशक्तिमत, सर्वज्ञस्य परमानन्दघनस्यापि भगवतो जीवावस्थाया न केवलमल्पशक्तिमत्त्वम् अल्पज्ञत्वम् अल्पानन्दवत्त्व वा सपादयति किंतु मूर्खराट्त्वमपि। अत एव च वस्तुत सर्वकर्तृत्वसपन्न स्वतन्त्रोऽपि जीव कार्यकाले आत्मानम् असमर्थं मन्यते। परन्तु यथा यथा अभ्यासेन सत्सङ्गेन वाज्ञान यावन्मात्रयास्य नश्यति, तथा तथा कस्मिन्नपि कार्ये कर्तृत्वक्षमताया अत्र प्रादुर्भावेण "इदमहं जानामि।" इति व्यवहारोऽनेन क्रियते। कर्तृत्वशक्ते प्रादुर्भावम् अन्तरा केवलज्ञानव्यवहारस्तु निरर्थक एव। अत एवोक्तम् —

"यः क्रियावान् स" पण्डित " इति।

यस्मिन् पुरुषे कस्यचित् कार्यस्य विषये सपूर्ण ज्ञान, तत्साफल्यसपादनेच्छा, तदर्थमुद्योगश्चेति त्रितय वर्तते, स एव नत्र समर्थ इत्युच्यते एव तादृशसामर्थ्यवशात् कार्यस्य सफलताया सत्या तज्जन्यानन्दानुभवोऽपि तस्य निश्चित एव। जीवस्य पुरतोऽसकृदानन्दस्यावसर आयाति, किंतु स स्थिरो न भवतीत्यत्र कारण तु स्वनिष्ठ-कर्तृत्वविषयेऽस्य विश्वासाभाव एव। जीवापेक्षया ईश्वरस्य वैशिष्ट्यमिदमेव, यत्-सर्वज्ञस्य तस्य सकल्पमात्रेण कर्तृत्वबलात् कार्यस्य सफलता निश्चिता। अत एव चानन्दस्यावश्यभावात् स परमानन्दघन इत्युच्यते।

अत्राय विशेष यत्-ईश्वरस्य सकल्पक्रिययोर्न भेदो भवति, तयोर् युगपदुद्भाविस्वात्। अत एवाभिनवगुप्तपादै — "यत्पुनर्ज्ञानं क्रिया च या।" इत्यत्र सकल्पस्य पृथगुपादान न कृतम्। एव रीत्या ईश्वरीयानन्दप्रभामिश्रितज्ञानप्रभाया एव जीवे सत्त्वरूपता, एवमानन्दप्रभामिश्रितायाः सकल्पाभिन्नक्रियाया रजोगुण-रूपता, पूर्वोक्तायास्तदीयमायाशक्तेरेव च तमोगुणरूपता भवति, तदुक्त भावप्रकाशनेऽपि —

"परस्मादात्मनो भान्ति ज्ञानानन्दक्रियाप्रभाः ।
ज्ञानप्रभा च सानन्दा तस्या सत्त्व प्रजायते ।"

इत्यादिना । जीवस्य सकल्पमात्र सफल भवत्येवेति न निश्चय । अत एव कार्यवैफल्ये सति स दु खपङ्के निमज्जतीति तु सर्वविदितमेव । किन्तु यदि जीवेन स्वसङ्कल्पे ईश्वरीय-सङ्कल्पानुसारित्व सपाद्येत, तर्ह्यवश्य तस्य कार्ये न कदापि विफलता दु खप्रसङ्गो वा भवेत् । प्रत्युत सर्वत्र सफलताप्राप्त्याऽनेनानन्द एवानुभूयेत । अधिक चैतत्-सत्त्वम् अधिकृत्य चातुर्वर्ण्यप्रकाशे स्फुटीकृतम् ।

* * * * * * * * * * * * * * * * * * * * * * * *

## सत्त्वम् एव राजनीतिप्राणरूपम् ।

* * * * * * * * * * * * * * * * * * * * * * * *

पूर्वोक्तरीत्या जीवेच्छारूपत्व प्राप्ताया ईश्वरेच्छाया अपि वस्तुतस्तदीयज्ञानान्न भिन्नता, तस्यैवाग्निमावस्था-रूपत्वात् । अत एव तादृशेच्छायामप्यानन्दप्रभामिश्रित-ज्ञान-प्रभाया अस्तित्व स्वभावसिद्धमेव । एव तादृशेश्वरेच्छानुसारिण्या क्रियायाम् अप्यानन्दप्रभामिश्रणेनावश्यभाव्यम् । अत ईश्वरोक्ताया नीतिरूपक्रियायामेव ज्ञानानन्दप्रभयो सत्त्वेन तादृश-नीत्यनुसारेण वर्तनमेव सत्त्वस्य समाश्रयण भवति । एव च तादृशनीते सम्यग्ज्ञानमेव बुद्धिपद-व्यपदेश्यम् । राज्याङ्गेष्वेतादृशसत्त्वबुद्ध्योर्योगे सति राष्ट्रे सर्वत्र सुव्यवस्था निश्चितैवेति सत्त्वमेव राजनीते प्राणरूपम् इत्यवश्य वक्तव्यमायाति ।

मनुष्यमात्रेण स्वेच्छा ईश्वरेच्छानुसारिण्य कर्तव्या इति यदुक्त तेन स्वेच्छाना प्रनिरोधात्तत्स्वातन्त्र्यमेव स्वीकृत न स्वातन्त्र्यमिति भ्रमस्तु न कार्य । यतो हि प्रायश सर्वेषा प्राणिनामिच्छा धर्मार्थकामरूपत्रिवर्गविषयिण्य एव भवन्ति । तत्सिद्ध्यर्थमेभिरनेके उपाया यद्यपि कल्पयितु शक्यास्तथाप्येते तत्र सफलताया अलाभे दु खभाजो भविष्यन्तीति तादृशेच्छाना वैफल्य-निराकरण-पूर्वक निश्चित-फलकत्व-सपादनार्थमेवेश्वरेच्छाया अनुसरण कृत भारतीय-राजनीत्या ।

प्रत्यक्षतः शास्त्रानुसारेण च सर्वेषु प्राणिष्वीश्वरस्यास्तित्वं पूर्वं प्रतिपादितम् । अधुना तदिच्छाया ज्ञानं कथं भवेदिति किञ्चिद्विमृश्यते ।

ईश्वरेच्छाया सकलजगद्धितसाधनाना च निश्चयो वेदादेव भवितुम् अर्हति । अस्याय सर्वाधिको विशेष ,—यदत्र क्वापि पूर्वापरविरोध अहित-सभावनाप्रसगो वा नोपलभ्यते । मायाविष्टेन मानवेन केवल स्वबुद्धिबलेन यत्सत्क्रियोऽद्येत, तत्र सर्वत्रास्याल्पज्ञतावशान्न्यूनता सभाव्यैव । एकत्रावधानेऽन्यत्र दुर्लक्ष्यताऽस्य भवतीति तज्जन्या हानिरपरिहार्यैव ।

अत्र विषये उदाहरणमिदमेव, यत् साम्प्रत सर्वत्र प्रचलितेन विद्युद्दीपेन यद्यपि प्रकाश-लाभस्तथापि तेन माकमनपेक्षिता नेत्रज्योतिषो हानिरपि सभाव्यते । एवमेवाधुनिकसत्योचितया शल्य-चिकित्साप्रणाल्या स्वास्थ्यलाभ इव तस्या दुष्परिणामोऽपि दृश्यते । केवल लक्षणानुसारेण क्रियामाणयाऽनया चिकित्सया व्याधिस्तु शीघ्र प्रतिरुध्यते, परं तस्या एव भविष्यतो नूतनव्याधेर्निरोधो न कर्तुं शक्य इति ।

## सत्त्व-गुण-रहितं राष्ट्रं विनाशोन्मुखं भवेत् ।

वेदमूलिकायाम् आयुर्वेदचिकित्साया त्वेतादृशो दोष कदापि न सभवति, तस्या निदानानुसारेण प्रवर्तमानत्वात् । अत एव परम्परागतायाम् आयुर्वेदचिकित्साया तदुक्तायाम् औषध-प्रक्रियाया तदुक्तेषु रोगलक्षणेषु रोगनिदानेषु वा नाद्यावधि कोऽपि विशेषज्ञो दोषम् उद्भावयितु समर्थोऽभूत् । किन्तु प्रकारान्तरेण तदुक्तानाम् एवाङ्गीकार सर्वैरपि क्रियते ।

यादृश-वेदमूलकस्वेनायुर्वेदस्यैतादृश माहात्म्य, तस्मिन्नेव वेदरूप-ज्ञाना मानवाना कल्याणार्थं सत्त्व-शील-सदाच-रादीनाम् आवश्यकत्वस्य निर्देशः समुपलभ्यते । ईश्वरानुग्रह एव च वैदिकविधि-वाक्यतोऽवगम्यते । अतस्तस्यानादरो विशेषज्ञैः कथं क्रियेत ?

वेदोक्तस्येश्वरानुग्रहस्याप्युपेक्षाया फलत्विदम् एव निश्चितं, यत् — राज्यचक्रस्य स्थिरता-सपादकेनात एव प्राणभूतेन सत्त्वगुणेन रहित सद् राष्ट्रं विनाशोन्मुखमेव भवेदिति । ईदृश रहस्य जानद्भिस्त्वाणक्यादिभि

य राजनीनौ वेदोक्त एव मार्गो व्यवस्थापि॰ । वेदाना य तु तेषा निर्दोषतया एव सिद्धम । तत्पा प्रामाण्य-निह्नवात । नर्दृष्टेन चक्षुषा यद् गृह्य, तस्य धूर्तवाक्यतोऽन्यवात्वशङ्का मूर्खना ायिकेति तस्य सत्यत्वमेव निश्चय । यथा राजनु । स्यात् अथभि-दद्दोषरहितत्वे पा ाग्य स्वीक्रियते, तथैव लौकि- ब्दाना वदिक॰ ा वा। वक्तृश्चे प्रमादविप्रलिप्साकरणापाटवरूप-दोषचतुष्टय-रहि-धानाना प्रामाण्यम् अङ्गीकार्यमे, वैदिकशब्दरशिस्तु भ्रमादिदोष-रयुक्त एव, यदाज्ञानुसारेण मूर्यादयोऽपि चलन्ति समस्तेषु पाञ्च-तत्त्वेषु यस्यैव सत्ता प्रचलति, यश्च निःस्वार्थस्ताविनेश्वरेण त्तस्य । अन एव भगवता श्रीकृष्णेनापि स्वमर्यादापालनम् एव ल्याणस्य मार्ग, अनेनैव च दैवीसम्पत्तेर्मूलभूत सत्त्व प्राप्तु शक्यम् म ।

तदुक्त गीतायाम् —

" य शास्त्रविधिमुत्सृज्य वर्तते कामकारत । <br>न स सिद्धिमवाप्नोति न सुख न परा गतिम् ॥ <br>तस्माच्छास्त्र प्रमाण ते कार्याकार्यव्यवस्थितौ । <br>ज्ञात्वा शास्त्र-विधानोक्त कर्म कर्तुमिहार्हसि ॥ " इति ।

मच्छिरोमणिना ज्ञानेश्वरेणापि वेदविषये एवमेवोक्तम् ।

" जो जगीं सम समान सकृपु । हिताहित दाखविता दीपु । <br>तो अमान्य केला बापु । वेदु जेणें ॥ " (१३-९६)-इति ।

राष्ट्रे मूलभूत-सत्त्वगुणाभिवृद्ध्यर्थमेव भारतीयराजनीतौ प्रत्यक्षा-रोरिव वेदरूपशब्दप्रमाणस्यापि समत्वा इष्ट । इदमेव भार-जनीतेश्चतुर्थं वैशिष्ट्य, यस्य च वैदिकेतरेष्वन्यासु राजनीतिषु असम्भव । एतावता प्रपञ्चेन भारती -राजनीते सर्वाङ्गपूर्णता-राष्ट्रेषु स्थिर-सन्धि-स्थापना सूत्र, शासने सौष्ठव-सम्पादिका नपद्धति, गुणोत्कर्ष-विषयको मार्ग, राज्यस्य प्राणभूत सत्त्वम् ॥ चतुर्णां निरूपण कृतम् । अथ प्रजासु स्वीयप्रभुत्वे स्थिरता-र्थं साम-दान-भेद-दण्डरूपेषु चतुर्षूपायेषु कस्यावलम्बन विशेषत -सस्यया कर्तव्यम् इति विचार प्रस्तूयते ।

# सद्व्यवहार-शासनस्य वृत्तिः —'वसुधैव कुटुम्बकम्।'

विचारोऽयं भारतीयराजनीतौ निर्दुष्टरीत्या कृतो वर्तते। अस्मिन्नपि विषये पाश्चात्त्यराजनीतेर्न्यूनताऽग्रे व्यक्तीभविष्यति। येन च भारतीय-राजनीतेः पञ्चमं वैशिष्ट्यं सर्वेषां हृद्गतं भवेत्।

सद्व्यवहारस्य तत्सफलतायाश्चाभिलाषो यदि राज्ञः शासकस्य वा स्यात्तर्हि तेनावश्यं सर्वेषां हृदि स्थितेन परमेश्वरेण सहाभिन्नेन भाव्यमिति पूर्वमेवोक्तम्। तादृशव्यक्तेः स्वभाव एवायं भवति, येन दयालुतावशात्कस्मा अपि दण्डदाने सहसा प्रवृत्तिस्तस्या व्यक्तेर्न भवति। किं च सा व्यक्तिः "वसुधैव कुटुम्बकम्" इति भावनावशात् पुत्रवद्वात्सल्यदृष्ट्या सर्वान् पश्यति। तत एवैतादृशव्यक्तिविषये कविकुलगुरोः कालिदासस्योक्तिरियम् —

"प्रजानां विनयाधानाद् रक्षणाद् भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः॥" इति।

एतादृशव्यक्त्या कदापि दण्डस्यार्पणमेव न क्रियते इति तु न, किंतु यदा दण्डमन्तरा अन्येन केनाप्युपायेन कार्यसिद्धिर्न भविष्यतीति ज्ञायते तदैवातिरूपेणातिकष्टेनैव दण्डप्रयोगः क्रियते, सोऽप्यनेनापराधिना पुनरपराधकरणे प्रवृत्तिर्मा भवतु, तस्य च प्रायश्चित्तं भवत्विति बुद्ध्यैव क्रियते। अत प्रायश्चित्तरूपेण प्रयुक्त एतादृशो दण्डः कदापि जन-विक्षोभ-कारणं न भवति, प्रत्युत जनतायाम् अनुरागमेव वर्धयति। अत्रोदाहरणमिदमेव यदत्यन्तदुष्टानां दानवानां वधरूपं प्रायश्चित्तं दत्त्वा कृते तेषां सद्गतिप्राप्तिः। अत एव देवस्य ... यशसा कृता —

"एभिर्हतैर्जगदुपैतु सुखं तथैते
कुर्वन्तु नाम नरकाय चिराय पापम्।
संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नूनमहितान् विनिहंसि देवि॥" इति।

## वीरेण सदा सर्वत्र विवेकशक्तिः समाश्रियते ।

एतादृशो दयालुरेव साहित्यशास्त्रानुसारेण 'वीर' इत्युच्यते । वीरेण सदा सर्वत्र विवेकशक्तेरेवोपयोग क्रियते इत्ययमंशो वक्ष्यमाणवचनस्य तात्पर्यावधारणेन स्पष्टमवगम्येत । तदुक्तं बालरामायणे —

"क्षुद्रा ! सन्त्रासमेते विजहत हरय क्षुण्णशक्रेभकुम्भा ।
युष्मद्देहेषु लज्जां दिशति इह मे सायका निष्पतन्त ॥
सौमित्रे ! तिष्ठ पात्रं त्वमसि न हि रुषां, नन्वहं मेघनाद ।
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि"॥ इति ।

अत्राल्पप्राणेषु वानरेषु दयालुतयैव वीरो मेघनादो बाणान् प्रक्षेप्तु नाभिलषति । एवं विवेकेनैव लक्ष्मणमपि न क्रोधपात्रतां नयति ।

दयाहीन पुरुषस्तु 'रौद्र'-पदाभाक्-क्रोध-परवशतया कमनर्थं न कुर्यात् ?

अत एव पितृमरणेन क्षुब्धस्य रौद्रस्याश्वत्थाम्नोऽविवेकपूर्विका उक्तिर्वेणीसंहारनाटके एवं वर्णिता --

'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनाम्
अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥" इति ।

अनेन वचनेन स्पष्टमवगम्यते यत् स निर्दुष्टस्यापि हत्यां वाञ्छतीति । अत एतादृशस्य विवेकशून्या वार्तापि कस्यचित् प्रिया न भवितुमर्हति । अयं भाव — रौद्रप्रकृतिको मनुष्य कर्तव्यबुद्धिं परित्यज्य स्वेच्छाचारस्यं-वाधीनतां गच्छति । यदि तन्मनोरथविपरीतं कार्यं केनापि क्रियेत, तर्हि क्रोधोऽस्मिन्नवश्यं प्रादुर्भवति । तेन च तर्कशक्तेर्मतिभावस्य च नाशो निश्चित एव । अतोऽश्वत्थाम्न इव कुनीतौ प्रवृत्तिस्तस्यावश्यम्भाविनीति लोकविश्वासस्तत्र कथं स्थिरो भवेत् ? अनेन राज्यसंघटनं तु दूरे आस्ताम्, तद्विघटनमपि प्रतिरोद्धुं न शक्यते । अतो रौद्रप्रकृतिक शासक प्रजासु सामाद्युपायानां यथावद्विनियोक्ता कदापि न भवितुमर्हतीति ।

## यथावत् सामादिप्रयोगेनैव वीरः सुयशोभाग् भवति

येन च स्वेच्छाचारपरित्यागपूर्वकं नीतिरूपकर्तव्यानुसरणं क्रिय तादृशो वीरस्तु सामादीनां यथावत्प्रयोगेनैव सुयशोभाग्भवति । त कार्येषु यावन्मात्रः प्रयोगः तदनन्तरमविलम्बिता स्यात् तावन्मात्रया सुयश निश्चितमेव, न कश्चन दोषोऽपायो वा । अत एवंतादृशमत्कर्मवि गीतायाम् उक्तम्

"**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते**" इति ।

अनयैव दिशा मीमांसकैर्नित्यकर्मविषयेऽपि '**आख्यानानाम भूतता शक्तिः सहकारिणी**–" इति न्यायेन यथाशक्ति तत्करणसमर्थ प्रवृत्ता । तेषामयमभिप्राय यत् कर्तव्यरूपेण प्राप्तेषु नित्यकर्मसु यथाशक्ति सम्पादितानि साधनान्येव पर्याप्तानि, शक्तिमतिक्रम्य सर्वाङ्गोपसंहारः न आवश्यकता तत्र, यत उद्देश्यभूता ईश्वरसेवा तत्प्रसन्नता वा, न कश्चन स्वार्थ इति ।

"**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**"— इत्यस्याप यमेवाशय । काम्यकर्मणि तु यथाशक्तिन्यायो न प्रवर्तते, तत्र कामना एव प्राधान्याद् ईश्वरसेवा । गौणत्वाच्च ।

एतावता रौद्रवीरयोर्विशेषः स्पष्टीकृतः, वीरप्रकृतिकेनाल्पेन साधनेन समादितं किञ्चिदपि कार्यं सफलमेव भवति । किन्तु स्वेच्छ चारेण कार्यसिद्धिं काङ्क्षमाणस्य रौद्रस्य कश्चिन्निश्चितं कार्यं कदाचि साफल्ये लब्धेऽपि तत प्रत्येकस्मिन् कार्ये सफलता प्राप्स्यतैवेति न विश्वा कर्तुं शक्य ।

रौद्रमनोवृत्तिद्वारा कस्यचिदनुष्ठानं न भारतीय-राजनीति-सम्मम अत्र विषये कामन्दकेनैवम् उक्तम्

"**अवश्यमायान्ति वशं विपश्चिताम् उपायसंदंशबलेन संपदः ।**
**भवत्युदारं विधिवत्प्रयोजिते फलं हि राज्ञां क्वचिदर्थसिद्धये ।।**" इति

अस्य श्लोकस्य जयमङ्गलाटीका एव वर्तते–"**उपाय एव संदंशस्तेनाकृ माणत्वात् । तद्बलेन तत्सामर्थ्येन । उदारं महत्फलमिति सम्बन्ध विधिवत्प्रयोजिते उपाये क्वचिद् अर्थसिद्धय इति संबन्ध ।**"–इति ।

अस्य साराशस्तु—केवलसिद्धयुद्देशेन क्रियमाण सामाद्युपायप्रयोगः प्रथम योग्य एव न भवति । कदाचिद् युक्तत्वेऽपि तस्य फलसिद्धिरल्पैव भवति, किन्तु कर्तव्यदृष्ट्या विवेकपूर्वक वीरेणोत्साहेनापि क्रियमाणात् तस्मादर्थसिद्धिर्निश्चितेति । "**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।**" इति श्रीकृष्णोक्तेरप्ययमेवाशय., यत्—मनुष्येण कर्तव्यमात्रे वीरोचिता वृत्तिरङ्गीकार्या न तु रौद्रवृत्ति । कर्तव्य-परताया फलम् आनुषङ्गिक भवत्येव । तत् लक्ष्यत्वेन न विवक्षणीयम् । अकार्ये प्रवृत्तिरपि नोचितेति ।

• • • • • • • • • • • • • • • • • • • • • • • • •

## उत्तम-प्रकृतिर्वीर उत्साहात्मा विभाव्यते ।

• • • • • • • • • • • • • • • • • • • • • • • • •

साहित्यशास्त्रे वीर-रौद्रयो स्वरूपस्य स्वभावस्य च यद् वर्णनमुपलभ्यते, तद्दर्शनेनेद स्पष्टमवगम्यते, यत्—पाश्चात्यराजनीतेर्लक्षिषु वीरवृत्तिनिर्माण न लक्ष्यमिति । एतादृशी तस्या न्यूनता अग्रिम-विवेचनेन व्यक्तीभविष्यति । वीरप्रकृतिक-मनुष्य-विषये भावप्रकाशने एवमुक्तम् "**उत्तमप्रकृतिर्वीर उत्साहात्मा विभाव्यते ।**"—इति । स खलु उत्साही सत्त्वसपन्नतया नीतिविरुद्धाचरणाभाववान् धर्मप्रधानबुद्धिमाश्च भवति, इदमेवोत्तमत्त्व तस्य । अर्थकामोद्देशेन स कदापि न प्रवर्तते । पर तदीयव्यवहारेणैव जनताया आकर्षणवशाद् अर्थादय स्वयमेव सिध्यन्ति । यथा सिह स्वतन्त्रमनोवृत्तिर्दक्ष उत्साही चेति पशूना राजा भवति, तथैव स्वतन्त्रो विवेकी दक्ष उत्साही च पुरुष सर्वेषा चित्तस्यावर्जनपुरस्सरं राज्ञो मन्त्रिणो वा पद प्राप्नोति । अत एव कामन्दकेनाप्युक्तम् –

"**शुश्रूषा श्रवण चैव ग्रहण धारण तथा ।**
**ऊहापोहोऽर्थविज्ञान तत्त्वज्ञान च धी-गुणाः ।** "

"**दाक्ष्य शौर्य्य तथाऽमर्ष शौर्यं चोत्साहलक्षणम् ।**
**गुणैरेतैरुपेत सन् राजा भवितुमर्हति ॥**"—इति ।

—अत्र च उत्साहे विशेषतो निर्भरस्तु तेन हि मनुष्यो मोहविषादविस्मयैरसस्पृष्टो भवतीति । उत्साहिना पुरुषेण ससारेऽस्मिन् स्वस्यासाध्य किमपि कार्य न दृश्यते । स्वसकल्पितात् कार्यात् तत्पूर्वमनन्तरमेव

स निवर्तते । अत एव तस्य पुरतो विस्मय-प्रसङ्ग कदापि नायाति । सत्त्वप्राचुर्येणेश्वरेच्छानुसारिण्या प्रवृत्त्या च नीत्यनुष्ठाने प्रमादो मोहो वा तस्मिन् न घटते । कर्तव्यबुद्ध्या प्रेरितत्वाद् विघ्नै विहन्यमानोऽपि विषाद न लभते । एतादृशस्य पुरुषस्य मित्रतासपादनार्थं गुणिनः कुलीनाश्च पुरुषा स्वयमेव प्रयतन्ते । प्रभुशक्तेर्मन्त्रशक्तेस्तन्मूलभूतस्य विनयस्य नीतेश्च समाश्रयणेन राजलक्ष्म्या अपि अस्य कण्ठे जयमाला प्रदीयते । अत एव भावप्रकाशनेऽप्युक्तम्—

"उत्साह सत्त्वसपत्तिशौर्यंत्यागाविसभव ।
अविस्मयाद्यसमोहावविषादित्वतोऽपि च ॥
पुरुषार्थविशेषेषु कार्यतत्त्वार्थनिश्चय ।
पराक्रम प्रतापश्च दुर्धर्षप्रौढसैन्यता ॥
यश कीर्तिश्च विनयो नयश्च प्रभुशक्तिता ।
मन्त्रशक्तिश्च सपक्षधनाभिजनमित्रता ॥
इत्यादयो विभावा स्युर्वीरस्य परिकल्पिता ।"—इति ।

अत्र मन्त्रशक्तेर्यशःकीर्त्योश्च विशेषोऽवश्य ज्ञातव्य । मन्त्रशक्तेरुपयोगो वीरेण सामादि-प्रयोग-प्रसङ्गे क्रियते । अत एव जयमङ्गलायाम्—

## षाड्गुण्योपयोगी विचारो मन्त्रः ।

"षाड्गुण्योपयोगी विचारो मन्त्र ।"—इत्युक्तम् ।

"धार्मिकत्व-प्रयुक्तोत्कृष्टत्व-प्रकारक-नानादिग्देशीय-लोकज्ञान-विषयता"—रूपा कीर्तिस्तु कुल-परपरागत-व्यवहारेण सपाद्या । अस्या उदाहरणम्—

"रघुकुलरीति सदा चलि आई ।
प्राण जाइ पर, वचन न जाई ॥"

—इति तुलसीदासोक्तौ द्रष्टव्यम् । केवल-स्वकीय-व्यापारेण जनिता पूर्वोक्तविषयत्वैव यश पदेनोच्यते । अत एव स्वपरीक्षार्थमुपस्थित सिंह प्रति

राज्ञो दिलीपस्य "यशःशरीरे भव मे दयालुः।" इति स्वेनो कृते स्वदेह-समर्पणेन गो-सेवा-जन्य-यशःशरीर-प्रार्थना। यद्यपि यशःकीर्त्यो कार्य-साफल्यानन्तरमेवोत्पत्तिस्तथापि तत्प्राप्तिर्यथा यथा भवेत्तथा तथा उत्साहो वर्धते इति तद्विभावत्वेन तयोः परिगणनं क्रमम्।

सत्त्वसत्त्वस्य वीरस्यानुभावाश्च तत्रैवोक्ताः —

"स्थैर्य-शौर्य-प्रतापश्च धैर्यराक्षेव-भाषिते।
सामादीनाम् उपायाना यथाकालप्रयोगतः॥
भावितैर्भावगम्भीरैरनुभावा भवन्ति ते।" इति।

## वीरनिष्ठ-शान्ति-प्रभावः सर्वत्र प्रसरति।

सत्त्वप्रधानत्ववशात् समस्तकार्येषु समप्रयोग एव विशेषतोऽस्य निर्भरो भवति। एतादृश-वीरस्य सत्ता-रूढतया शासनकार्ये विशेषतो माधुर्यमायाति। जनतायामप्युग्रवृत्तिनिरोधपूर्वकं कर्तव्यभावना जागर्ति। यतो हि वीरनिष्ठाया शान्ते प्रभावः समन्ततः प्रसृतो भवति अत एव भारविणा किरातार्जुनीये एतादृश-शासकस्य चित्रणमेव कृतमस्ति।

"न तेन सज्जं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम्।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम्॥" इति।

भारतीयराजनीत्यापि सामप्रयोगायैव मुख्यं स्थानं दीयते। तदुक्तं कामन्दकेन —

"साम्नार्थसिद्धये विद्वान् यतेत यतमानसः।
सामसिद्धिं प्रशंसन्ति सर्वतश्च विपश्चितः॥"
"क्षीरोदो मथितः साम्ना फलायामरदानवैः।
निजघ्निरे धार्तराष्ट्राः सामप्रद्वेषिणोऽचिरात्।" इति॥

सामलक्षणं च —

"वाग् अनुद्वेग-जननी सामेति परिकीर्त्यते।" इति।

अयमर्थः — यथा ग्रीष्मसन्तप्तेन मनुष्येण क्वचिच्छीतलता-व्यवस्था-लाभे शान्तिर्लभ्यते, तथैव यादृशवचनेन व्यवहारेण वा सर्वे शीतलता

अनुभूयेत तादृश वचन व्यवहारो वा सामपदार्थ इति । एतादृशसान्त्व-युक्त पुरुष सर्वैरभिलष्यते, तस्माद् दूरस्थितिर्न कस्यापि समता भवति । तत्कारण तु जनताया दु खेनाय स्वयमपि दु खितस्तन्निवारणे सदा प्रयतते, तत्र न कदाप्युपेक्षा करोति इति । एतादृशपुरुषस्य लोकप्रियतावियये वाल्मीकिनैवमुक्तम् —

* * * * * * * * * * * * * * * * * * * * * * * * * *

## युक्तनेतुः कार्याय सर्वेषा प्राणार्पण-सिद्धता ।

* * * * * * * * * * * * * * * * * * * * * * * * * * *

" यश्च राम न पश्येत् य च रामो न पश्यति ।
निन्दित स भवेल्लोके स्वात्माप्येन विगर्हते ॥ " इति ।

वस्तुतो नेतृत्वस्य स्वरूपमिदमेव । एतादृशनेतृत्वेनैव शरीरे यथा विभिन्नानामङ्गानाम् एकप्राणता दृश्यते, तथैव राज्याङ्गेषु सर्वेषु सामरस्यमुत्पद्यते । अत एवैतादृशनेतु कार्यार्थं राष्ट्रान्तर्गता प्रत्येक व्यक्ति प्राणसमर्पणेऽपि सनद्धा भवति । तदुक्त भारविणा दुर्योधनवर्णन-प्रसङ्गे किरातार्जुनीये —

" महौजसो मानधना धनार्चिता धनुर्भृत सयति लब्धकीर्तय ।
न सहतास्तस्य न भिन्नवृत्तय. प्रियाणि वाञ्छन्त्यसुभि. समीहितुम् ॥ इति ।

सामप्रयोगश्च पञ्चविध उक्त कामन्दकेन । स यथा —

" परस्परोपकाराणा दर्शनं गुणकीर्तनम् ।
सम्बन्धस्य समाख्यानमायते सप्रदर्शनम् ॥
वाचा पेशलया साधु तवाहमिति चार्पणम् ।
इति सामप्रभेदज्ञै साम पञ्चविध स्मृतम् ॥ " इति ।

अत्र प्रत्येक पृथक्प्रयोजनक वर्तते ।

१) पूर्वकृतानामुपकाराणा सदर्शनेनान्योन्य शत्रुताया भय निवर्तते ।

२) यस्मिन् ये गुणा सन्ति तेषा यथासमय प्रकटनेन गुणग्राहकताया परिचयो भवतीतीर्ष्याया अवसराभावेन मित्रता स्थिरीभवति ।

३) विवाहादि-प्रसङ्गेषु सबन्धिना स्मरणेन प्रेमतन्तुरविच्छिन्नो भवति। इत्यादि।

४) तथा व्यवहार कर्तव्य, येनान्योन्यमैत्र्या एव लाभोऽत्रे भविष्यति इति सदा ज्ञायेन।

५) मनोवाक्कायकर्मभिस्तवाहमित्यभिप्रायप्रकटनम्। इति च चतुर्थपञ्चमयोनिर्वचनम। अनेनैव प्रकारेण शरणागत विभीषण भगवान् रामचन्द्र प्रतिजग्राह किल। एतादृशसामोपेक्षाया फलम् इदम् एव, यत् स्वराष्ट्रस्य दुरवस्थावशात् स्वकीयेष्वेव शत्रोर्भेदनीति-प्रचारस्याव-सरलाभ। ईदृगाद् दुष्परिणामादात्मन सरक्षणार्थमपि विशेषेण साम्न आवश्यकता वर्तते। तदुक्त काम-दकेन —

" क्व च नरपतिवर्ग सग्रह क्व प्रजाना
मधुरवचनयोगाल्लोकमप्यावहेति।
मधुरवचन-पाशैरायतत्लानित सन्
परमपि हि न लोक सस्थितेर्भेदमेति॥ " इति।

अस्य श्लोकस्य जयमङ्गला च —

" मधुरवचनयोगादिति, सूनृतया वाचा वक्तादियर्थं, सद्वृत्ता-दिति शेष। अत्र सद्वृत्तादिति वक्तव्ये मधुरवचनग्रहण प्रजासङ्ग्रहो-पायेषु सूनृता वाणी प्रधानमिति दर्शनार्थम्। पाशा इव पाशा मधुर-वचनपाशैराञ्तानित अयर्थं सबद्ध। पद स्तोक न सस्थितेर्भेदमेति राज्ञि कृतावस्थाना परैर्न भिद्यते इत्यर्थ " — इति।

## मनोनिग्रह-समर्थः एव सामप्रयोगे सफलः।

एतावता सत्त्वप्रधानस्य सामप्रयोगद्वारा लोकसग्राहकस्य च नेतृ-त्वस्य परिचयो दत्त। अयात्रविषये वर्तमाना पाश्चात्यराजनीते न्यूनता उपस्थाप्यते। विषयेऽस्मिन यावती दृष्टिरपेक्षिता तावती पाश्चात्यनीतौ दत्तेति न दृश्यते। यतो हि-मनोनिग्रहसमर्थ एव सामप्रयोगेऽपि सफल भवति। अन्यथा दुर्योधनस्येव केवलसत्त्वाभिनयेन तात्कालिक-फललाभे अपि त-परिणामो विपरीत एव भवति। अत एव तत्र सज्जनताया

आवश्यकत्वमुक्तम् । पर सज्जनता न परलोकविश्वासम् अन्तरा स्थिरता लभते, इति सिद्धान्त । पाश्चात्यनीतौ तु तस्यैव मूलच्छेद दृश्यते, अतस्तत्र सत्त्वस्य स्थानमेव नास्तीति सत्त्वयुक्तम्य । रस्य नेतृत्व तत्रा सभवीत्यवश्य वक्तव्यमापतति । केवलरौद्रप्रकृतिकाना नेतृत्व पुरस्कृत्य सा कियत्कालपर्यन्त स्थास्यतीति न वक्तु शक्यम् । स्थिरस्य सामप्रयोगस्याभावेन च तत्र कदाचिदपि जनक्षोभनिवृत्तेराशा गगनकुसुमायितैव । अत पाश्चात्यनीतेरियं न्यूनता अविवेकप्रयुक्ताऽत्यन्त हृदयद्राविका वर्तते ।

• • • • • • • • • • • • • • • • • • • • • • • •

## दानेन द्विषन्तो मित्राणि भवन्ति ।

• • • • • • • • • • • • • • • • • • • • • • • •

सामप्रयोगविचारानन्तरमिदानी दानविषये भारतीय-राजनीत सिद्धान्त उच्यते । व्यवहारे शास्त्रे च उभयत्र स्व-स्वत्व-निवृत्तिपूर्वकपर-स्वत्वापादनमेव दान-शब्दार्थ । यथा यावत्तडागे जल तिष्ठति, तावदेव तत्र विहङ्गमादीना वसतिभवति, यावच्च गौर्दुग्ध ददाति तावद्वत्सोऽपि तत्समीपे तिष्ठति, एवमेव यावच्छासनमस्यया कल्पवृक्षवल्लोकाना मनोरथ पूर्यते, तावदेव तदाज्ञा लोके पाल्यते तत्सेवापि क्रियते च । तदुक्त कामन्दकेन—"**जनो दातरि रज्यते**"—इति । अत एव—

"**दानेन द्विषन्तो मित्राणि भवन्ति**"— इति श्रुतिरपि यथार्था भवति । दानरताया एव शासनसस्थाया विषये जनताया सदा देवत्व-बुद्धिर्जागृता तिष्ठति । ये खलु प्रियवचसो दानशीलाश्च ते देवतावद् वन्द्या भवन्ति । तदुक्त कामन्दकेन —

"**ये प्रियाणि च भाषन्ते प्रयच्छन्ति च सत्कृतम् ।**
**श्रीमन्तो वन्द्यचरणा देवास्ते नरविग्रहा ॥**" इति

साम्न इव दानस्यापि पञ्च भेदा नीतिसारे उक्ता । यथा —

"**य सप्राप्तधनोत्सर्ग-उत्तमाधममध्यम ।**
**प्रतिदान तथा तस्य गृहीतस्यानुमोदनम् ॥**

# ईश्वरप्रीत्यर्थं दानस्यैव भारतीय-नीतौ व्यवस्था ।

द्रव्यदानमपूर्वं च स्वयंग्राहप्रवर्तनम् ।
देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥ "

—इति । एतेषां तद्दृष्टान्तनिर्वचनम् इदमेव, यत्—

१) यथा श्रीकृष्णेन सत्राजिताय तदीयं स्यमन्तकमणिं प्रतिदत्तं, तथा यद्वस्तु यस्य वर्तते तस्मै गृहीतस्यापि तस्य पुनः प्रतिदानम् ।

२) यथा सीतायाः स्थितिं ज्ञात्वा प्रत्यागतानां कपीनां मधुवने फलादिभक्षणं सुग्रीवेणानुमोदितम्, तद्वद् यदि स्वकीयस्य वस्तुन उपयोगः केनापि क्रियेत, तदा तदनुमोदनम् ।

३) बलिकर्णादिवद् ईश्वरप्रीत्यर्थं दानकरणम् ।

४) यथा सेनापतिना सैनिकेभ्यः शत्रुनगरे वस्तूनां यथेच्छमपहरणे सम्मतिर्दीयते, तथा अन्यस्य वस्तु यदि केनचिदपरेण स्वीक्रियेत तदा तद्विरोधम् अकृत्वा यथाशक्ति तत्-साहाय्य-करणम् ।

५) ऋणिनः ऋणस्य प्रतिमोचनं चेति ।

* * * * * * * * * * * * * * * * * * * * * * * * *

# देवतामन्दिरादिवृत्तिविलोपः शासनेन न कार्यः।

* * * * * * * * * * * * * * * * * * * * * * * * *

पूर्वोक्त-पञ्चविध-सामप्रयोगेण सह एतादृश-पञ्चविध-दानप्रयोगेऽपि क्रियमाणे राज्ये कदापि कलहस्य द्रोहस्य वा नावसरः, प्रत्युत शान्तिपूर्वकं सर्वेषामैक्यस्य मार्गो निष्कण्टको भवति । ईश्वरप्रीत्यर्थं क्रियमाणस्य दानस्यैव व्यवस्था भारतीय-राजनीतौ विशेषतो वर्तते । तत्र भूकम्पोऽवर्षण जलप्रलयो महामारिकेत्यादयः प्रकृतिविक्षोभा न सम्भाव्यन्ते । एतादृश-प्राकृतिक-क्षोभात् संरक्षणाय शास्त्रस्य नीतावद्यापि लोप-लब्धो वर्तते । चरकादिग्रन्थेषु तन्निवारणोपायास्तत्कारणानि च विस्तरतो वर्णितानि । तन्निवारणार्थमेव कामन्दकेनापि देवतामन्दिरादीनां वृत्तिविलोपः शासनसंस्थया न कार्य इति निर्दिष्टम् । तदुक्तम् —

"काले स्थाने च पात्रे च न हि वृत्तिं विलोपयेत् ।
एतद्वृत्तिविलोपेन राजा भवति गर्हितः ॥ " इति ।

इतिहासतोऽपि ज्ञायते, यद् दानेन विग्रह-प्रशमन-प्रथा पूर्वत एव प्रचलिता वर्तत इति। पुरा किल वृषपर्वनाम्नो दानवेन्द्रस्य शुक्राचार्यस्य च परस्परं कस्मिंश्चिद् विषये विवादः संवृत्तः। तच्छान्त्यर्थं राज्ञा शुक्राचार्यं प्रति यद्भवदभीष्टं तद् ददामीत्युक्ते "त्वत्कन्या मददुहितुर्देवयान्याः सेवार्थं यदि दीयेत तर्हि त्वद्राज्ये वसनिमिया क्रियेत नान्यथा" इति समयः शुक्राचार्येण कृतः। राजापि कन्यां दत्त्वा विग्रहं शमयामास। अतो राज्ञ ईदृश्या बुद्धिमत्तायाः प्रशंसा नीतिज्ञैः क्रियत एव। एतद्वैपरीत्येन पाण्डवेभ्यो ग्रामपञ्चकमप्यदत्त्वा विग्रहद्वारा सर्वेषां नाशं कारितवतो दुर्योधनस्य तु निन्दैव तैः क्रियते। तदुक्तं कामन्दकेन —

"दारुणं विग्रहं विद्वान् दानेन प्रशमं नयेत्।
अपदानेन वृहितुः कुपिते भगुनन्दने॥
वृषपर्वा च दानेन दानवेन्द्रोऽभवत् सुखी।
उपच्छन्दानि शतश्च बलिने शान्तिमिच्छता॥
समूलमेव नाधारिरर्पयच्छत् यतः क्षयम्॥" —इति।

अथ क्रमेण भेददण्डयोर्विचारः प्रस्तूयते। तत्र व्यवहारे तावद्भेदशब्दोऽन्योन्यमैक्यस्य विच्छेदे रूढः। स एव च कलह-पद-वाच्यः। विस्तृते शक्ति-शालिन्यपि राष्ट्रे अन्तःप्रविश्य शनैः शनैर्भेद-नीति-प्रचारार्थं प्रयत्यत एव। तादृश्या शत्रोर्भेदनीतेरज्ञानेन परस्परं वैमनस्य कलहश्च प्रवर्तते राष्ट्रे। तेन च जायमानं शक्तिह्रासं शत्रोर्लाभदायकं सम्पन्नं तत्पारवश्यमानयति। भेदस्यास्य त्रैविध्यम् उक्तं नीतिसारे—

"स्नेहरागापनयनं सङ्घर्षोत्पादनं तथा।
सतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः॥"

— इति। अत्र "शङ्कातननं निर्भर्त्सनं च भेदः।"

— इति चाणक्योक्तस्य द्वैविध्यमेवोक्तम् इति आपाततोऽनयोर्मतभेद इव यद्यपि दृश्यते, तथापि वस्तुतो विचारप्रमाणे नयोर्मतैक्यमेव प्रतिभायात्। यतो हि–कामन्दकेन निर्दिष्टयोः प्रथम-द्वितीययोर्भेदयोः स्थाने चाणक्येन तत्कारणीभूतस्य शङ्का-जननस्य परिग्रहः कृत, तत्कार्ययोः पृथगुपादानं न कृतमिति।

## शङ्काविषं राष्ट्रसुव्यवस्थाविनाशकत्वाद् भयकरम्

भेद-प्रयोगे शङ्का-जनन-मात्रेण स्नेह-रागयोर् अपनयन मानापमान-भावनाया प्रोत्साहन, स्पर्धाया उत्पाद सघर्षस्य बीजारोपणमित्येतत्सर्वं सुशक भवति। अत शङ्काख्य विष तु राष्ट्रे सुव्यवस्थाया विनाशकत्वादतिभयङ्करम् । इमा भेदनीतिम् एवाश्रित्य पाश्चात्यैरत्युन्नतायापि भारतवर्षाय रसातलमार्गं प्रदर्शितो वर्तते। अतिप्राचीनकालादारभ्य गुणोत्कर्षविधायकेन मार्गेण परस्परप्रेमपूर्वकम् उन्नते शिखर प्राप्तवति भारतवर्षेऽद्य सर्वत्र वैमनस्येन व्याप्तमित्यत्र कारण तु पाश्चात्याना स्वीय-दुर्विचार-प्रचारद्वारा भारतीयाना हृदये सदेह-बीजारोपणमेव। स्थिरसघेर्मूलभूतस्य वेदशास्त्राद्यध्ययनस्यैव विषये तै पूर्वम् अनेन जीवन-यात्रा कथ निर्वहेत् ? इत्याद्य शङ्का उत्पादिता ।

## वेदाध्ययने जीवन-निर्वाह-शङ्का अनुचिता

अत्र यादृश-शङ्कया सर्वेषा हृदयमाक्रान्त, सा निर्मूला कथ भवितुमर्हतीति पर्यनुयोगस्य समाधान पूर्वोक्तविचारेषु सम्यगालोचितेषु स्वयमेव भविष्यति। वैदिक-विधि-निषेधाना केवल पारलौकिकोत्कर्षसाधनमेव प्रयोजनमित्याधुनिकाना धारणैव प्रथमतो निर्मूला। यतो हि ऐहलौकिकोत्कर्षेण सहैव पारलौकिकश्रेय सपादन तेषा मुख्य लक्ष्यम्। साम्प्रत यल्लौकिकोत्कर्षोद्देशेन क्रियमाणा सर्वेऽपि प्रयत्ना विफला भवन्ति, अथवा किञ्चिद्-सफलताया प्राप्तायाम् अपि तत्र याऽशान्त्यादिमूलिका विघ्नपरपराऽऽयाति, तत्कारणन्त्वस्माक तदर्थं निश्चितफलकस्य वैदिक-मार्गस्योपेक्षैव । विश्वकल्याण-परायणेषु वैदिक-मार्गानुयायिषु कश्चनैकोऽपि सेवकोऽन्न विना मृत इत्यत्र किमपि प्रमाणम् इतिहासेऽपि नोपलब्धु शक्यम । अस्याम् अवस्थाया विधिप्राप्तस्य वेदाध्ययनस्य विषये जीवन-निर्वाह-शङ्का कथम् उचिता भवेदिति विवेकिन एव विचारयन्तु। भारतीये आदर्श-जीवने तु दृढ-विश्वास-पूर्वक कर्तव्य-तत्त्वावलम्बनेन जीवन-निर्वाह-चिन्तापि पाप-कुक्षौ प्रविष्टा वर्तते। तदुक्तम् —

**"का चिन्ता मम जीवने यदि हरिर्विश्वम्भरो गीयते ।**
**नो चेदर्भकजीवनाय जननी-स्तन्य कुतो निःसरेत् ?"**

इति । एतादृशविश्वासस्योपयोगो न निष्क्रियताया कर्तव्यः किन्तु लोकसेवा-भावनाया दृढतायाम् एव, यस्या परिणामोऽवश्य लोकानुराग-प्राप्ति ।

भारतीय-विचारधारायास्तर्कसङ्गतत्वेऽपि जनताया हृदयम् एतादृशशङ्कयाऽऽक्रान्त भवतीत्यत्र कारण तु सत्तर्कशक्ते प्रचाराभाव एव।

येषु मनोदौर्बल्य स्यात्तेष्वेव शङ्कया स्थान लभ्यते। तदुक्त भावप्रकाशने —

**"शङ्का सर्वेहरूपा स्यात् स्त्री-नीच-प्रकृति-स्थिता ।।"** इति ।

शङ्काया प्रवेशे सति क्रमेण स्नेहस्य भक्तेश्च ( रागस्य ) ह्रासो भवति। अत्र स्नेहरागयोर्वैलक्षण्यमवश्यमवधेयम् । कस्यापि वस्तुन प्रथमदर्शन-जन्यसुखानुभवेन या तत्सङ्गमनेच्छा सा स्नेह-पद-वाच्या, अस्या एव प्रौढताया सत्या रति-सज्ञा भवति। अनयैव च स्नेहस्य शोभा वर्धते। अस्या अवस्थाया परिचयमनु यदा प्रेम-विषयस्य वियोगेन प्राणहानि-सभावनापर्यन्त महत्कष्टमनुभूयेत तदैषा ज्ञेया। तदुक्त भावप्रकाशने —

**"विवेशस्थे मृते वापि दुर्बले प्रतियोगिनि ।**
**धर्मिण क्लेशकारी य स प्रौढ स्नेह उच्यते ।।"** इति ।

अस्याम् अवस्थायाम् अन्योन्य भयस्यानिष्टशङ्कायाश्चाभावेन नि शङ्कता भवति। तदुक्त तत्रैव — "**भयशङ्कावसानात्मा स एव स्नेह उच्यते ।**" इति । एतादृशस्नेहस्याग्रिमावस्था रागो भवति। तदानी तु केवल सुखम् एवानुभूयते न तु दुःखलेशोऽपि । अन्योन्य हृदययोरेकात्मतया शीतलताया अनुभवति। ईदृशप्रेमनाशेन यदा ईश्वरोऽपि न मुच्यते, का वार्ता मनुष्यस्य ? तदुक्तम् —

**"सुखदु खात्मक भोग्य सुखत्वेनाभिमन्यते ।**
**येन राग स इत्युक्तो रञ्जनाद्विषयात्मनो ।।"** इति ।

प्रेमिणो परस्पर पार्थक्यस्यापि विस्मरण यदा भवति, तदाऽनुरागावस्था । तदुक्त— '**रागोऽनुवृत्तोऽविच्छिन्नोऽनुराग उदाहृत.**" इति ।

## अनुरागविच्छेदार्थं शङ्का-शस्त्र-प्रयोगः।

स्नेहरागानुरागाणा विषये उदाहरणम् इदमेव, यत् प्रत्येक जीवस्य स्वशरीरे यत्प्रेम तद्-वशात् स अहमेव शरीरमिति जानाति। किं च केनापि प्रकारेण शरीरात् स्वस्य भय शङ्का वा न भवति, प्रत्युत शरीरार्थं सर्व-प्रकारेण कष्टसहनेऽपि सुखमेवानुभूयतेऽनेनेति। इयमेव अनुरागमूला प्रेमिणोरवस्था। एतादृशानुरागविच्छेदार्थं शत्रुणा राष्ट्रे शङ्का-रूप शस्त्र प्रयुज्यते। जनताया हृदये कथमपि शङ्कया स्थान लब्ध चेत् शत्रो कार्यं सपन्न भवति। अत एवोक्तम्— जनताया आर्थिकसमृद्धौ सलग्नया शासनसस्थया सदा स्वविषये जनतायाम् अनुरागो यथा जागृयात् तथा प्रयतितव्यम् इति।

" जितेन्द्रियत्व विनयस्य लक्षण, गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुराग-प्रभवा हि सपद ॥"

— अस्य श्लोकस्याप्ययमेव गूढाशय। अत्र प्रतिपादितस्य विनयशब्द-स्यार्थस्तु शास्त्रमर्यादानुसारेण तदुक्तानुष्ठानमिति।

एतादृशविनयद्वारैव राष्ट्रस्यानुकूल्यसपादकत्व शासनसस्थाया सभवति, यतो हि लोकविश्वासस्यापीदमेव मूलकारणमिति। शासन-सस्थाया जनानुरागस्योत्तरोत्तराभिवृद्धौ सत्या शासनसस्थाप्रजयोरन्योन्य भयशङ्काराहित्येनैकात्मता सिध्यति। अस्याम् अवस्थाया राष्ट्रम् अत्यन्त समृद्ध भविष्यत्येवेत्यत्र नास्ति सशीतिलेशोऽपि।

## उच्चनीचभाव-कल्पनया शासनपराभवः निश्चितः।

एकात्मतावस्थायामपि यदि शासनसस्थया जनताया तर्कशक्ते-र्दार्ढ्यंमपादनेऽवहितया न भूयेत, नहि तत्र शङ्काविषसचारणे शत्रु सफलो भविष्यति। नश्य च परिणामोऽन्योन्यम् ईर्ष्योत्पाद कर्तव्य-मूलिकाया सेवाभावनाया क्षीणता च। उच्चनीच-भाव-कल्पनया च

परस्परम् अपमानकारका एव व्यवहारा सर्वत्र प्रचलिष्यन्ति राष्ट्रे । तेन चान्ते शासनसंस्थाया पराभवो निश्चित एव ।

अथ निर्भर्त्सन-रूपस्य भेदनीतेर्द्वितीय-प्रकारस्य उपयोग शत्रुणा कथ क्रियते ? इत्युच्यते । पूर्वं शत्रुर्धनादिप्रलोभनद्वारा प्रजासु ये खलु लुब्धास्तान्वशीकृत्यानन्तरमन्यानपि भयप्रदर्शनपूर्वकम् अन्यपक्षतो विच्छेदयति । तदुक्तम् — "क्रुद्धलुब्धभीतापमानिता परेषां कृत्याः ।" इति ।

एव रीत्या भारतीय-राजनीतौ साधक-बाधकरूपेण सर्वं प्रतिपादितम् अस्ति, परम् अमु विषय दुर्लक्ष्यीकृत्य यदि वयं शत्रुकृतायाभेदनीतेर्विषया भवामस्तर्ह्यस्माकमेव दोषो नान्यस्य । अतो भारतीयराजनीतिविषयेऽपि नीतिज्ञाना दृष्टे आकर्षणम् आवश्यकम् ।

* * * * * * * * * * * * * * * * * * * * * * * *

## नीतिकुशलैः यद् अनुमोद्यते स एव धर्मः ।

* * * * * * * * * * * * * * * * * * * * * * * * *

अथाधुना दण्डनीतेर्विषये भारतीयराजनीतेर्वैशिष्ट्य निरूप्यते । एतत्तु पूर्वमेवोक्त यत् – प्रायश्चित्तरूपेण प्रयुज्यमानस्य दण्डस्य न लोकोद्वेग-जनकत्वम् इति । अस्य च दण्डस्य त्रैविध्यम् उक्त कामन्दकेन —

"वधोऽर्थहरण चैव परिक्लेशस्तथैव च ।
इति दण्डविभागज्ञैर्दण्डस्तु त्रिविधः स्मृत. ॥" इति ।

दण्डस्यावसरस्तदैवायाति, यदा कोऽपि स्वेच्छाचारेणान्यस्मै कष्टप्रदाने प्रवृत्तो भवेत् । तादृशे पुरुषे दण्डविधान तु शासनसंस्थाया मुख्य कर्तव्यमेव । अन्यथा दुष्टानाम् एतादृशाचरणे उपेक्षाकारिणी शासनसंस्था प्रजापालन-रूपात् स्वधर्माच्च्युता सती लोकेऽपि निन्दिता भवति । एतावत्तु सत्यमेव यद्दण्डविधानेन दुष्टस्य पीडाऽवश्य भवेदिति, परमत्रायमेव धर्म । अत एव भारतीय-राजनीतौ धर्मपदस्य व्याख्या "नीतिकुशलैर्यदनुमोद्यते स एव धर्म ।" इति कृता वर्तते । तदुक्त नीतिसारे —

"यमार्या क्रियमाण हि शसन्त्यागमवेदिन ।
स धर्मो य विगर्हन्ति तमधर्मं प्रचक्षते ॥" इति ।

इयं व्याख्या न केवल राजनीति-सम्मता, अपि तु धर्मशास्त्र-सम्मतापि ।

यदि कस्यचन घोरापराधिनो वधदण्ड एव नीतिज्ञ-समत, प्राजापत्यादि-प्रायश्चित्तद्वारा तस्य शुद्धिर्न तत्समता भवेत्, यदि चास्य दुष्टस्य वधेन सपूर्णस्य राष्ट्रस्य कल्याण भविता, तर्हि स दण्ड· शिष्ट-समततया धर्मरूप एव। एवमेव जातिमर्यादाया उल्लङ्घयिता जात्या दण्डितो भवति, तादृशो दण्डो भारतीय-राजनीतेर्विशेषत समत इत्यस्य कारण तु पूर्वमेव विवेचितम्। यथा शरीरे कस्यचिदङ्गस्य दूषितत्वे तस्य च्छेदनमेवा-वश्यक तथैव सदाचार-हीनाया व्यक्तेर्दूरीकरणेन सामाजिक-सौष्ठवस्य रक्षा जात्या यदि क्रियेत तर्हि तद् युक्तमेव। सदाचारहीना व्यक्तिस्तु ससर्गेन सपूर्णामेव जाति दूषिता विधाय तदगुणोत्कर्षे बाधिका भवति। अत एव धर्मशास्त्रे पतितससर्गोऽपि निषिद्ध ।

"ब्रह्महत्या सुरापान स्तेय गुर्वङ्गनागमः।
महान्ति पातकान्याहुर्यश्च तै· सह सवसेत्॥" इति।

एतादृशाना पातकिना दण्ड शासनसस्थाया समाजस्य वाऽपेक्षया जात्यैव विधीयमान सुकरो भवति। आयुर्वेदेनापि पातकिभ्य औषधदान

* * * * * * * * * * * * * * * * * * * * * * * *

## देशार्थ-समृद्धौ बाधकाना निग्रह आवश्यकः।

* * * * * * * * * * * * * * * * * * * * * * * *

निषिध्यते। गृहे हिंस्रपशूना सर्पादीना वा वासो यथा हानिकरस्तथैव यदि पातकिना सबन्धो जातो भवेत् तर्हि जात्या सह समाजस्य राष्ट्रस्य हानिर्निश्चिता। भगवान् श्रीकृष्णो ब्रह्मण्यदेव एवासीत्, पर तस्यापि, ब्राह्मणेनाश्वत्थाम्ना सुप्ताना पाण्डवपुत्राणा वधरूप निन्द्य कर्म यदा कृत तदा अर्जुनद्वारा तस्य दण्डविधानम् आवश्यक सवृत्तम्। अयम् इतिहास एतादृशप्रसङ्गे सस्मर्तुं योग्य। एतादृशाना दण्डेन जनताया क्षोभस्तु न भविष्यत्येव, प्रत्युत सा प्रसन्नैव भवेत्। वृश्चिकादीना वध सज्जनैरपि समर्थ्यते। अत एवोक्तम् —

"मोदेत साधुरपि वृश्चिक-सर्प-हत्यया॥" इति।

दुष्कर्मकर्तारो दण्डयोग्या एव, पर ये किल गोप्यतयाऽपराधा क्रियन्ते तेषा प्रकाशदण्ड शासनसस्थया कर्तुम् अशक्य। तादृशापराधानामुपेक्षापि

न युक्ता, यतस्ते कण्टकरूपेण देशस्य हानि सतत क्रियेत । लोकमर्यादा-रक्षण-दृष्टचा देशस्यार्थसमृद्धौ प्रमादा नोचित, अतस्तादृशमार्गे ये बाधका भवन्ति तेषा निग्रह आवश्यक इति कामन्दकस्य मतम । तदुक्तम् —

"धर्मसरक्षणपरो धर्मायार्थं विवर्धयन् ।
ये ये प्रजा प्रबाधेरस्तास्तान् शिष्यान्महीपति ॥" इति ।

अत एव तादृशेषूपाशुदण्डरूपेण विषादिप्रयोगो विहित । यतो हि — एतेषाम् अपराधस्य प्राकटयाभावान् प्रकाशदण्डो विधीयमानो जनक्षोभकारी स्यात् । एव रीत्या दण्डस्य द्वैविध्यम् —

"प्रकाशश्चाप्रकाशश्च द्विविधो वध उच्यते ।" इत्यनेनोक्तम् । उपर्युक्तविवेचनेनेव स्पष्ट भवति, रुद्रोद्रप्रकृतिको मनुष्य एव प्रकाशदण्डपात्र भवतीति । यत. तस्य अपराधा प्रकाशरूपेणैव क्रियन्ते इति स

• • • • • • • • • • • • • • • • • • • • • • • •

## गुप्तापराधशालिनाम् उपांशु-दण्डयोग्यता ।

• • • • • • • • • • • • • • • • • • • • • • • •

सर्वेषा द्वेषविषय एव भवति । लोकानाम अपमानकरण, मिथ्याभाषण, हननप्रवृत्तिर्विश्वासघाताचारादीना निन्दा, बलाद् अन्येषा सपत्तिहरणम् इत्यादीनि तस्य स्वाभाविकानि कार्याणि भवन्ति । भावप्रकाशन तस्य स्वभावा एव वर्णिता —

"रौद्रस्तस्यानृत वाक्यमवज्ञा परुषोक्तय ।
धनान्यदारलाभादिप्रतिज्ञा राष्ट्रभञ्जनम् ॥
हठाद्ग्राहो गृहक्षेत्रदारादीना च मत्सर. ।
देशजातिकुलाचारविद्याशौर्यादिनिन्दनम् ॥
आक्रोशकलहाक्षेपवाक्याज्ञाभञ्जनादय ॥" इति

एतादृश-व्यक्तीना प्रतीकारे विकीर्णा जनता न समर्था भवतीति तस्या एवैकत्र समवेता शक्ति. शासनसस्थारूपेण तत्कार्यं करोति । एतद्विपरीतास्तु गुप्तापराधशालिन उपांशु-दण्ड-भाग्या भवन्ति । प्राचीनकालेऽपि शम्बूक-कालनेम्यादीना गुप्तापराधिना वर्णनम् उपलभ्यते । तैर् यद्यपि प्रकाशरूपेण अपराधा न कृतास्तथापि स्वकर्तव्य-रूप-देशसेवा-

विमुक्ततया नीतिदिष्टया ते गुप्तापराधिन एवासन् । अपराधिनश्च पञ्चोक्ता नीतिसारे —

> "आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् ।
> पृथिवीपतिलोभाच्च प्रजाना पञ्चधा भयम् ॥" इति ।

अपराधिषु दण्डप्रयोगे करणीये यदि शासनसस्थयाऽसत्यस्याप्याश्रयण कर्तव्य भवेत्तर्हि तदपि धर्मसरक्षणदृष्ट्या उचितम् एव इति नीतिज्ञै स्वीक्रियते । अत एव गौतमेनाप्युक्तम् —

> "तत्त्वाध्यवसायसरक्षणार्थं जल्पवितण्डे बीजप्ररोहण-सरक्षणार्थं कण्टकशाखावरणवत् । ताभ्या विगृह्य कथनम् ।" इति ।

## मदोन्मत्त-पराजयार्थं जल्प-वितण्डाश्रयः कर्तव्यः ।

अय भाव — मद-मानयो प्राबल्ये सति मनुष्यो यथार्थमपि वस्तु न जानाति । किं च मदयुक्ते पुरुषे वेदादीना गुरुजनाना सुहृदा च तिरस्कार स्वभावसिद्धो भवति । सदनद्विचारम् अपि कर्तुं न पार्यते तेन । यदि त सान्त्वयितु केनापि प्रयत्यते, तर्हि तस्मिन् मदस्याभिवृद्धिरेव भवति । न्याय्यमार्गोऽपि दूरे एव तिष्ठति । अतस्तस्य गर्वापहरण शासनसस्थयाऽस्तत्त्वज्ञाना वा अवश्यकर्तव्य भवति । मदोन्मत्तस्य पराजयार्थम् एव वादिना जल्पवितण्डाश्रयण कर्तव्यम् इति गौतमेनोक्तम् । तेन तत्त्वसरक्षण भवेदिति । "न विगृह्य कथा कुर्यात्" इति छलाश्रयणनिषेधस्तु केवल तत्त्वनिर्णयप्रयुक्तया वादपद्धत्यामेव प्रभवति । यतो हि—तत्र गर्वशून्यस्य सज्जनस्यैव प्रवर्तमानत्वात् जल्पवितण्डाश्रयण-प्रसङ्ग । अनेनैव न्यायेन प्रजापालनोद्देशेन दुष्टनिग्रहार्थं यदि शासनसस्थयाऽसत्योपायावलम्बनम् अपि कर्तव्य भवेत्तर्हि तदपि लौकिकपारलौकिकोभयविधश्रेयोबाधक न भवेत् । प्रत्युत एवम् अकरणे एव दोष उक्तो मनुस्मृतौ । यथा —

> "अदण्ड्यान् दण्डयन् राजा दण्ड्याश्चैवाप्यदण्डयन् ।
> अयशो महदाप्नोति नरकं चैव दारुणम् ॥" इति ।

ईदृशनीतेराश्रयणनेव इन्द्रेणापि पूर्वं वृत्रासुरेण सह सन्धिं कृत्वा पश्चादवसरे तस्य वधः कृत । तथाप्यस्य प्रशंसैव सर्वे कृता।

अत्र शासनसंस्थया इदम् अवश्यम् अवधातव्यम् यत्—तस्येर्ष्यावशाद् द्वेषेण वा निरपराध-व्यक्तिषु कदाप्युपांशुदण्डप्रयोगो न कर्तव्य इति। यतो हि—विकीर्णशक्तौ निर्बलाया जनताया स्वरक्षार्थं शासनसंस्थाया बलसंवर्धनं कर्तव्यम् इति यो नीतिमार्गं उपदिष्टस्तस्यैव न प्रयोजन यत्—शासनसंस्थया जननाबाधिकया भाव्यम् इति। सर्वेषा पुरत शिष्टा सन्तो ये खलु गुप्तापराधिनस्तेषूपांशुदण्डप्रयोगो यथा शासनसंस्थया क्रियते, तथैव तादृश-प्रयोग-शक्ति जनताया हस्तेऽपि निहिता वर्तते भारतीय-राजनीत्यनुसारेण। अत एवाचार्यचाणक्यं सम्राजोऽपि नन्दस्य उपर्युपांशु दण्डप्रयोगकरणम् अनिवार्यतया आपतितम् इति इतिहासतो ज्ञायते। तथापि यावच्छक्यं गुप्तापराधिनाम् अपराध प्रकाशम् आनीय प्रकाशदण्डविधानम् एव श्रेयस्करम् इति भारतीय-राजनीतेर्मतम्। तथापि यदीदृशाना दण्ड अन्येन क्रियेत, तदा तज्ज्ञानेऽपि शासन-संस्थाया उपेक्षैव समुचिता नीतिरित्युक्तम्। अत्र विषये कीचकस्य इतिहास उदाहरणम्—राज्ञो विराटस्य श्यालक कीचक शक्तिशालितया तस्यान्त-शत्रुरेवासीत्। एकदा सैरन्ध्री-नाम्ना राज्ञो गृहे एकवर्षपर्यन्त सेवा-करणार्थम् आगताया द्रौपद्या उपर्यस्य कुदृष्टि पतिता। सैरन्ध्र्या अपि "मम पतय' पञ्च गन्धर्वा गुप्तरूपेण मद्-रक्षा कुर्वन्तीति प्रसिद्धि कृताऽऽसीत्। तथापि तस्या अनुगमनं कीचकेन न त्यक्तम्। विषयोऽय सैरन्ध्र्या राज्ञ सविधे निवेदितस्तथापि तत्रोपेक्षैव कृता राज्ञा। तया च कीचकस्य लालसाऽत्यन्तं वृद्धि गता। तस्या परिणामस्तु गन्धर्व-व्याजेन भीमेन कृतं तस्य हननम् एवं।

अनेन सन्दर्भेण-कीचकविषये विराटस्य सर्पच्छुच्छुन्दर्योरिव दशाऽऽसीद् इति ज्ञायते। कीचकस्य राज्यान्निष्कासनम् अपि अवश्यम् आसीत्तस्य सबन्धोऽप्यभीष्टो नासीत्। अनस्तेन स्वयमुपांशुदण्डप्रयोगम् अकृत्वा द्रौपदी-निवेदनस्योपेक्षयैव कार्यसिद्धिर्निश्चिता, यतो द्रौपद्या वचनेन तस्या पत्युर्गन्धर्वात् कीचकस्य प्राणहानिरवश्य भविता इति पूर्वमेव ज्ञातमासीत्।

अत्र राज्ञा कृतोपेक्षा नोचितेति केचिद् आक्षिपन्ति। परं कीचकस्य

## नीति-प्रयोगे कामन्दकदत्तम् उपेक्षा-स्थानम् ।

उपाशु-दण्ड-रूपेण नीतिमूलिकैव साऽऽसीत् । उपेक्षाद्वारा भीमहस्तात् तन्मरणस्य प्रतिरोध दूरीकृत्य, विना दण्डभङ्ग सर्प-मारणस्य उपायोऽनुसृतो राज्ञा । ईदृश-नीति-मार्गानुसरणेन विराट स्वय कण्टक-रहित श्यालक-वधात् सभाविताल्लोकापवादात् मुक्तश्चाभूत । नीति-प्रयोगे उपेक्षाया अपि स्थान प्रदत्त कामन्दकेन, यथा —

> 'साम दान च भेदश्च दण्डश्चेति चतुष्टयम् ।
> मायोपेक्षेन्द्रजाल च सप्तोपाया प्रकीर्तिता ॥" इति ।

सत्वप्रधानैर्वीरै स्वभावत. प्रयुज्यमाना सामादयोऽत्यन्त महत्त्वपूर्णा भवन्ति । तेष्वपि विशेषत उपेक्षाया एव प्रयोगो दैवीसम्पद्युक्तै. क्रियते ।

शरच्चन्द्राणामिव मानवसमाजाय आनन्दामृत पाययता सज्जनाना निन्दा प्रकृत्यैवेर्ष्यया दुष्टै क्रियते । पर ते तु योगसिद्धान्तानुसारेण तद्विरुद्ध क्षमाव्रतम् एवानुतिष्ठन्ति । तेन च दुष्टैरिमे दुर्बला इति मत्वा पुन पुनरधिकतया क्लेशो दीयते । किंतु सताम् उपेक्षैव तावद्दुष्टजन-विरोधार्थं काचन तटस्था व्यक्ति कामपि घटना वा समुपस्थापयति । तेन दुष्टाना शिक्षा अन्यत एव भवति । दुष्टकार्यदर्शनेन सज्जनान् विहाय अन्येषा क्रोधोद्भून स्वाभाविक । तस्यैव क्रोधस्य अतिरेके सति विना हत्या तच्छान्तिर्न भवति । अत एव नृसिंहेन हिरण्यकशिपो आन्त्राण्यपि निष्काश्य मालारूपेण धृतानि । भीमेन अपि दु शासनस्य हृदय विदार्य क्रोधवशात तद्रक्त-प्राशनम् आरब्धम् । अनयो क्रोधस्य परा काष्ठा दृष्ट्वा क्रमेण लक्ष्मीर्द्रौपदी चात्यन्त भयाक्रान्ते आस्ताम् ।

भावप्रकाशने क्रोधस्य श्रेण्यो निरूपिता. । यथा —

> " प्रथमा निन्दति गुणान् द्वितीया परुष वदेत् ।
> तन्नाशोपायचिन्तैव तृतीया समुदाहृता ॥
> चतुर्थ्यां हननेच्छा स्यात् पञ्चम्यामायुधग्रहः ।
> षष्ठ्या निहन्ति वेगेन विघ्नैरपि निवारित ॥
> सप्तम्यां निहतस्यासृक्पानमान्त्रापकर्षणम् ॥ " इति ।

## दुष्ट-क्षत्रिय-निग्रहार्थं परशुरामस्य शस्त्र-धारणम् ।

क्रोधस्य सप्तभिरवस्थाभिर्यदा लोके दुष्टाना दण्डस्य मार्गं प्रकृत्या नियतो वर्तते, तदा सज्जनाना क्षमाव्रतत्यागस्यावश्यकतैव कुतो भवेत् ? एतादृशोऽपि समयः कदाचिद् भवति, यदा सत्तामेव बाहुल्य लोके भवति । तदानी क्षमाव्रत परित्यज्य दुष्टनिग्रहार्थं स्वय शस्त्रग्रहण तेषा कर्तव्यतया समापतति । एतस्योदाहरण तु त्रेतायुगे दुष्टाना क्षत्रियाणा निग्रहार्थं परशुरामस्य शस्त्रधारणम् । चतुर्ष्वपि युगेषु कलियुगमेवात्यन्त श्रेयस्कर, यत्र सज्जनाना दुष्टनिग्रहार्थं शस्त्रग्रहणस्य आवश्यकतैव न भवति, यत सर्वत्र रौद्रप्रकृतिकाना बाहुल्यात् तेष्वेव परस्पर कलहेन एतेषा क्षमाव्रत निर्विघ्न भवति ।

एव रीत्या प्रमाणत्रयसमन्वयेन लौकिक-पारलौकिकोभयविध-श्रेयोदृष्टया च भारतीय-राजनीतौ सामाद्युपायाना यथोचितो व्यवहार उक्त । एतदतिरिक्ता काचन नीति पाश्चात्य-नीतौ नोपलभ्यते । एतेषाम् एव किञ्चिद्-वैलक्षण्येन प्रयोगस्तत्र दृश्यते ।

अथ कस्योपायस्य कदा कुत्र प्रयोग कर्तव्य ? इत्ययम् अवशिष्टोऽशो विचार्यते । येन भारतीयराजनीते षष्ठी विशेषता अद्यतनपरिस्थितौ कस्योपायस्य अवलम्बन सफल भविष्यतीति च ज्ञायेत ।

पूर्वोक्ता सामादयश्चत्वार उपाया यदि क्रमेण प्रयुज्येरंस्तर्हि तेऽनुलोमप्रयोगसञ्ज्ञका भवन्ति । यदि च तेषा वैपरीत्येन प्रयोग क्रियते, तर्हि ते प्रतिलोमप्रयोग-पदवाच्या भवन्ति । एतेषा क्रमेणाहत्य विशद्भेदा भवन्ति । तथा हि विषयभेदेन एतेषा पृथक् पृथक् प्रयोगा भवन्तीति चत्वारः । तत्र यद्येकस्यामेव व्यक्तौ सामदानयो सामभेदयो सामदण्डयो दानभेदयोः दानदण्डयो भेददण्डयोश्च प्रयोग प्रसज्येत तदा षट् । यदि च एकत्रैव क्रमेण त्रयाणा मेलनेन प्रयोग क्रियेत, तदा चत्वार । एकत्रैव चतुर्णामपि प्रयोगे एक इति मिलित्वाऽनुलोम्येन प्रयोगे पञ्चदश भेदा भवन्ति । एवमेव प्रातिलोम्ये पञ्चदश ज्ञेया ।

तत्र कस्य प्रयोगस्य को विषयो भवतीति विचारो विस्तरेण नीतिसारे प्रतिपादित —

" अलस विक्रमे श्रान्त विहतोपायचेष्टितम् ।
क्षयव्ययप्रवासैश्च श्रमेण विपरिप्लुतम् ॥
भीरु मूर्खं स्त्रिय बाल धार्मिक दुर्जन पशुम ।
मंत्रीप्रधान कल्याणबुद्धि सान्त्वेन साधयेत् ॥ "

एव—" लुब्ध क्षीण च दानेन "— इत्यादिना ।

## स्वकर्तव्यपरायणानाम् आदरः कर्तव्य एव भवति ।

तत्र ये खलु स्वकर्तव्यपरास्तेषामादर कर्तव्य एव भवति । अन्यथा ते शासनसस्था प्रति उदासीना भविष्यन्ति । अत सामैव तेषा वशीकरणे उपयुक्त भवति । लुब्धास्तु सदा धनार्थायैव युक्तास्तिष्ठन्ति, अतस्ते धनलोभेन शत्रुपक्षमाश्रित्य शासनव्यवस्थाया क्षतिकारका भविष्यन्तीति तेभ्यो द्रव्यदानम् आवश्यकम् । ये खलु राज्यविरुद्ध सघटन कृतमस्ति, तेषु भेदप्रयोग कर्तव्य । तेषा नेतृषु ये क्रुद्धलुब्धभीतापमानिता स्युस्तेषा यथावज्ज्ञानपूर्वकम् उचितया भेदनीत्या तेष्वेव परस्पर कलह उत्पादनीय । मुद्राराक्षसे वर्णिते चाणक्य-चन्द्रगुप्तयो मवादे ज्ञाते मतीदृश-प्रयोगस्य सम्यग्ज्ञान भविष्यति । दण्डस्य प्रयोगस्तु केवल दुष्टानामेव वशीकारार्थम् उपयुज्यते, यतस्तेऽन्यैरुपायैर्योग्यमार्गे आनेतु शक्या न भवन्ति ।

सा नदानयो सयुक्त प्रयोग पुत्रादि-बन्धुवर्गे कर्तव्य शासनवर्गेण । सदा एतेषा स्वस्माद् विश्लेषो यथा न स्यात्तथा प्रयतितव्यम् । तदुक्त नीतिसारे —

" आत्मान प्रथम राजा विनयेनोपपादयेत् ।
ततोऽमात्यास्ततो भृत्यास्तत पुत्रास्तत. प्रजा ॥ " इति ।

अनेनेद स्पष्ट भवति, यत् –स्वपुत्राणा विनीतता-सपादन शासकानाम् अवश्यकर्तव्यमिति । यतस्त एव वशस्य राज्यस्य च समृद्धौ कारणानि भवन्ति । एव बन्धवो जन्म-मरणादि-प्रसङ्गेषु साहाय्यकर्तारो भवन्ति । एतेषु लोभसभावनयैव सामदानयो सयुक्त प्रयोग उक्त । यद्येतैर्विरुद्ध

## बन्धुबले सति शासकस्य न कुतोऽपि भयम् ।

सघटन कृत स्यात्तर्हि तेषु दानभेदयोरपि प्रयोग आवश्यक । बन्धुबले सति शासकस्य न कुतोऽपि भय भवितुमर्हति । सामन्ताना राज्यात् परिभ्रंशिताना च वशीकारार्थं भेददण्डयो सयुक्त प्रयोग कर्तव्य । एव रीत्या सर्वेषा प्रयोगाणा विचारे क्रियमाणे स्वतन्त्रो विस्तीर्णो ग्रन्थो भविष्यति । अत सक्षेपत तत्सूत्र निर्दिष्टम् ।

साराशस्तु – तत्तत्प्रसङ्गमौचित्य च ज्ञात्वा तत्तत्प्रयोगा कर्तव्या, अत्रैव वीरस्य बुद्धिमत्तापेक्षिता । यथा वैद्यक-ग्रन्थेषु केवलम् अमुकरोगे अमुकम् औषध देयमिति लिखित वर्तते, पर चिकित्सकेन स्वबुद्धया सम्यङ्गनिदान ज्ञात्वा तत्तदुपयुक्तम् एवौषध देय भवति ।

अथ वर्तमान-परिस्थितौ कस्यावलम्बने सफलता-सपादने आवश्यकम् इति विविच्यते । अनेन प्रसङ्गेन इदम् अवश्य ज्ञायेत यद् वर्तमान-परिस्थितिम् आयति च सम्यक्जानाना जागरूको नीतिज्ञ-समाजो देशसेवा-भावनया साम्प्रत विद्यासेवाया सलग्नो वर्तते । यथाशक्ति सामप्रयोग-द्वारा आलस्यादि-ग्रस्ताना व्यक्तीना स्वसिद्धान्त प्रत्याकर्षणे प्रयतते च । एव भेदद्वारा पाश्चात्याना यथार्थदोषोद्घाटनेऽपि सलग्नोऽस्ति । ईदृशानुष्ठाने बाधकान् दुष्टान प्रत्युपेक्ष्याया आश्रयणम् अपि कृतमनेनेति । अनेन प्रयोगेण देशे एकसूत्रतानिर्माणम् अवश्य भविष्यति, जनतया विश्वासद्यचाभिमन्वर्णे वर्धेतेत्यत्र न सदेहलेशोऽपि । एव रीत्या यथार्थ-स्वराज्य-सघटनार्थं जागरूको वर्णाश्रम-स्वराज्य-सङ्घानुयायी नीतिज्ञ-वर्गोऽय भारतीय-राजनीतिर्लक्ष्यानुसारेणैव प्रचलतीत्यवश्य वक्तव्यम् । नीतिसिद्धयर्थादर्शशुद्धप्रयोगस्य विषये न कस्यापि वैमत्य भवितुमर्हति ।

अस्यैव मार्गस्य पुष्टिर्मनुना कृता । यथा —

" सैनापत्य च राज्य च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्य च वेदशास्त्रविदर्हति ॥ " इति ।

अत्र वेदशास्त्रवित्-पद सत्त्वप्रधान-नीतिज्ञ-बोधकम् । जागरूकेण नीतिज्ञ-वर्गेण परिचालितोऽय मार्गो यथा प्रत्यक्ष-तर्काभ्या सिद्धस्तथा धर्मशास्त्रवचनरूपशब्दप्रमाणेनापि । सामदण्डयोर्विषये मनुना एवम् उक्तम् —

" सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ "

" अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥ "

" राजभिर्धृतदण्डा ये कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ " इति ।

अत्र सत्येन सह प्रियवचनस्यादेशः सामप्रयोगदृष्ट्यैव कृतः । प्रियत्वेन सहैव सत्यत्वस्य वचने विधानस्य सज्जनता-समाश्रयणे तात्पर्यं बोध्यम् ।

## भेदविषये धर्ममूलकाचारः प्रमाणम् ।

एवमेव दानविषये — "दानेन द्विषन्तो मित्राणि भवन्ति, तस्माद् दानं परमं वदन्ति ।" इति श्रुतिः । भेदविषये धर्ममूलक आचारश्च प्रमाणम् ।

यतो हि – वेदान्तादिशास्त्रेषु परमतनिराकरणपूर्वकम् एव स्वमत-स्थापनं क्रियते । इयमेव भेदनीतिः ।

एतावता वर्तमानपरिस्थितावावश्यकं कर्तव्यं निर्दिश्य एतादृश-कर्तव्य-पथे जनता कथम् आरूढा भवेदिति विमृश्यते । येन देशे मुख्य-लक्ष्यस्य साधनमपि सुनिश्चितं भविष्यति । वस्तुतोऽधुना सर्वेषां नीति-ज्ञाना पुरः प्रश्नोऽयं समुपस्थितो वर्तते ।

अत्र विषये भारतीय-राजनीतौ प्रमाणत्रय-समन्वयेनेदम् उक्तम्, यत् —

" तत्राद्य प्रथमोपायो यद्विद्यावृद्धैः सार्धं विद्याचिन्ता, विद्याप्रति-बद्धश्चाल्लोकस्थितेः इति । विद्यया लोकस्य च कीदृशः सम्बन्धो वर्तते ? इति पूर्वं ज्ञातेऽस्य वचनस्य तात्पर्यं स्पष्टं भवेत् । श्रीशङ्कराचार्यैर्हि— "नीतिरस्मि जिगीषताम्" इति गीताव्याख्यानावसरे "विजयोपाय-

प्रदर्शन नीत्या क्रियते" इत्युक्तम् । किं च तत्रैव "जयोऽस्मि व्यवसायोऽस्मि ।" इत्यत्र "विजयस्य स्वोत्कर्षस्य ।" इति प्रतिपादितम् । एवं कियताशेन स्वोत्कर्षं साधित इत्यपि नीत्यैव ज्ञातुं शक्यम् । यदि स्वकृतस्यादेशस्य उल्लङ्घनं केनापि न क्रियेत, स सर्वैः पाल्येत च, तावता स्वोत्कर्षस्य फलं प्रत्यक्षसिद्धं भवति ।

एतादृशादेशप्रयोजकमान्यता गता पञ्चधा विभक्ता मनुना —

**"वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।**

**एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥"** इत्यनेन ।

अत्र धनिका अपि क्वचित्तस्य बन्धुवर्गस्यानुगामिनो भवन्ति, सोऽप्यनुभवशालिना वृद्धानाम् अनुगामी । वृद्धा अपि स्वयं कार्यकरण-सामर्थ्याभावात् कर्मिणाम् अधीना भवन्ति । कर्मिणामपि विषमप्रसङ्गे विदुषामाश्रयणं कर्तव्यं भवति । अतः उत्तरोत्तरं मान्यताधिक्यं बोध्यम् ।

## स्वोत्कर्षस्थापनार्थं सर्वनेतृत्वभारः विद्वद्धस्ते ।

एवं रीत्या स्वोत्कर्षस्थापनार्थं सर्वनेतृत्वस्य भारो विदुषां हस्ते निक्षिप्तो वर्तते । अतो यथार्थस्वराज्यस्थापनार्थं राष्ट्रप्रकृत्यनुकूल-विद्यानिष्णाताना वैशसेविना विदुषां समूहस्याविकलेन निर्माणं प्रथमतोऽपेक्षितमस्ति । विद्याबलसवर्धनस्येव राजनीतावपेक्षिताना बहुविधाना कार्याणां मध्ये सन्मित्र-लाभस्याप्ययस्त महत्वपूर्ण स्थानं वर्तते, यतो ह्येकाकिना सर्वं कार्यं कर्तुं न पार्यते । मित्रत्वस्यायमेवादर्शो यन्मित्रहितोद्देशेन स्वप्राणसमर्पणेऽपि सदा सन्नाह । तदुक्तम् —

**"सत्त्वमयति मित्राणि ह्यमित्रं नाशयत्यपि ।**

**भूकोषवद्धेर्वजति प्राणैरप्युपकारिताम् ॥"** इति ।

एतादृशमित्रसंपादने सत्त्वस्य विद्यायाश्च महान् उपयोगो भवति, विश्वासमूलभूतत्वात्तयो । सन्मित्रलाभे सति अपेक्षितानाम् अन्येषां समस्तसाध-

* * * * * * * * * * * * * * * * * * * * * * * * * *



* * * * * * * * * * * * * * * * * * * * * * * * * *

नानाम् अपि लाभ सहजत एव भवति । यस्मिन् विश्वासभूमिका स्थिरा भवति, तेन आवश्यकतानुसारेण यथेच्छ धनादीना सचय कर्तु शक्य । तदुक्तम् —" **यस्मिन् विश्वासमायाति विभूते पात्रमेव सः ।** " इति । चाणक्येनापि अर्थशब्दव्याख्याया विद्याया मित्रस्य च परिगणन कृतम् । तथापि विद्यायै प्रथम स्थान दत्वा अन्ते मित्रस्य कथन, साधनसमुच्चयेन तदेव सहायक भवतीति द्योतनार्थम । तदुक्तम्–" विद्या-भूमि-हिरण्य-पशु-धान्य-भाण्डोपस्कर-मित्रादीनाम् अजनम् अर्जितस्य विवर्धनमर्थं । इति ।

अत साम्प्रत देशे सर्वेषु कर्तव्यपरताया उत्पादनार्थं राष्ट्रप्रकृत्यानुकूल्येन विद्याया यथावत्प्रचारे प्रयत्नो विधेय इत्यायाति । यथावत्प्रचारण च, राष्ट्रान्तर्गताना विद्यार्थिना चित्ते विलासिताया मदमानयोश्च निरोधपूर्वक देशसेवाभावनया विद्यासपादने सलग्नता-सपादनानुकूलो व्यापार । पाश्चात्त्यप्रणाल्या प्रचाल्यमाना वर्तमानाशिक्षा त्वत्यन्त नीतिविरुद्धा, यतस्तत्र छात्रेषूच्छृङ्खलताविलासिताभिमानज्ञानहीनत्वादीना दुर्गुणाना प्रोत्साहनमेव भवति । कि च तत्र उत्पद्यमाना विनयहीनता पूर्वोक्तसत्त्वगुणस्यैव मूलोच्छेदिका । विलासिता स्वभावेन च कर्तव्यपथम् आरोढु न प्रभवन्तिच्छात्रा । विलाससाधनानि तु न कदापि पूर्णतया सपादयितु शक्यानि । अत एव इदानी छात्रेषु विशेषतो व्याप्नुवत क्षोभस्य अनुशासनहीनतायाश्च प्रशमन दुष्कर भवति । ईदृशासतोषेण तु यतो विलाससाधनाना पूर्त्याशा भवेत्तत्रैव तेषा प्रवृत्तिर्भविष्यति । ततश्च तत्र शत्रुणा भेदप्रयोगस्य अवसर सहजत एव प्राप्नोति । अत एव भारतीय-राजनीतौ यथावद् विद्याप्रचारेऽत्यन्त निर्भरो वर्तते ।

तत्र कीदृश-विद्याना प्रचार आवश्यक ? इति चेद् उच्यते –

१) समस्तविद्याना यथार्थबोधजनने, शत्रुभि प्रमाथमाणाना भ्रमकुशङ्कादीना निवारणे च समर्था तर्कविद्या आन्वीक्षिक्यपरपर्याया ।

२) स्थिरपने प्राणभूतस्य परलोकविश्वासस्य उत्पादिका वेदादि-शास्त्रविद्या त्रयी-पद-वाच्या ।

३) अर्थोत्पत्तिसाधनीभूता कृषि-पण्य-पशुपाल्य-विषयिणी वार्ता विद्या।

४) स्वकर्तव्यस्य सुरक्षायाश्च मार्गप्रदर्शिका राजनीतिविद्या चेति चतसृणां विद्यानां मुख्यतया प्रचार आवश्यक इति।

## त्रिवर्ग-समृद्धि-संपादनार्थम् एव भारतीयराजनीतिः।

तदुक्तं नीतिसारे —

"आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः।
तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद् विनयान्वितः॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः॥" इति।

एतावता विवेचनेन संक्षेपतः पाश्चात्य-नीतौ स्थितानां दोषाणां निराकरणोपाया, तत्सम्बद्धानाम् अन्येषाम् अङ्गानां पूर्णतया निर्देशश्च भारतीय-राजनीतावुपलभ्यन्ते इत्यवगतं भवेदेव। अत अन्ते इदमेव वक्तव्यं, यत् —

यदि राष्ट्रे धर्मार्थकामरूप-त्रिवर्ग-समृद्धेः संपादनम् अभीष्टं, तर्हि प्रथमतः सर्वाङ्ग-परिपूर्णायां भारतीय-राजनीतेः अनुसरण-व्रत-ग्रहणं सर्वैः सचेतोभिः अवश्यं कर्तव्यम् इति। इतः परम् —

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥"

इति गीतावाक्यं स्मृत्वा लेखाद् अस्माद्विरम्यते। इति शम्।



| | | |
|---|---|---|
| २८ धन्योऽहं धन्योऽहम् | डॉ ग. बा पळसुले | ५ ०० |
| २९ खेटग्रामस्य चक्रोद्भव | डॉ ग. बा. पळसुले | १ ०० |
| ३० अप्पाशास्त्रि-चरितम् | प वा. ना ओदुम्बरकर | ४० ०० |
| ३१. शिवराज्याभिषेकम् (महाराष्ट्रशासनस्य पुरस्कारेण प्रकाशितम्) | डॉ श्री भा वर्णेकर | १०.०० |
| ३२ श्रीगणपति-वाक्यार्थ-महासभा | प वसन्त अनन्त गाडगीळ | ५ ०० |
| ३३ अमरनाथकथा | ना रा बोडस | ५ ०० |
| ३४ आचार्यचरितम् | प कुमठेकर नारायणशास्त्री | २ ०० |
| ३५ श्रीगणपतिवाक्यार्थमहासभा | प वसन्त अ गाडगीळ | ५ ०० |
| ३६ श्रीविष्णु-सहस्र-नाम-स्तोत्रम् | प भीमाशंकर त्र्यम्बक केळे | २५ ०० |
| ३७ यशोधरा-महाकाव्यम् | प ओगेटि परीक्षितशर्मा | १५ ०० |
| ३८ श्रीविष्णुसहस्रनामावलि । | प वसन्त अ गाडगीळ | २ ०० |
| ३९ मनोबोध । | श्रीरामदासानुदास | १ २५ |
| ४० उपनिषन्मधु | मनोहर दिवाण | ५ ०० |
| ४१. सहस्ररत्नमाला | प्रा नलिनी पराडकर | १ ५० |
| ४२ स्तोत्राष्टकम् | विद्वान् बालगणपतिभट्ट | १ ५० |
| ४३ गणयज्ञाग: | प्रा कमलारत्नम् | १ ०० |
| ४४ स्तोत्ररत्नमाला | प्रा ह त्र्य देसाई | १ ५० |
| ४५ श्रीशरन्नवरात्रचम्पूः | को कृष्ण जोयसर् | ५.०० |
| ४६. भारतीय-राजनीति-प्रकाश | प गजेश्वरशास्त्री द्रविड | १५ ०० |
| ४७ हरिपाठ | प म स आपटीकर | २ ५० |
| ४८ ते वय पारसीका | डॉ त्रि ना धर्माधिकारी | २ ५० |

प्राप्तिस्थानम् –
शारदा'-कार्यालयः, पत्रमञ्जूषा 750 पुण्यपत्तनम् 411 030

18985

## शारदा-गौरव-ग्रन्थमाला, 'शारदा', पुणे ३०

| पुष्पम् | लेखकः | मूल्यम् |
|---|---|---|
| १. डॉ. राजेन्द्रप्रसादचरितम् | वा. आ. लाटकर | ३.०० |
| २. वात्सल्यरसायनम् | डॉ. श्री. भा. वर्णेकर | १.०० |
| ४. श्रीरामकृष्णपरमहंसीयम् | डॉ. श्री. भा. वर्णेकर | १.२५ |
| ५. बालकानां जवाहरः | पं. विघ्नहरि भा. देव | १.०० |
| ६. श्रीमान् विन्स्टनः चर्चिलः | पं.वा.ना.औदुम्बरकरशास्त्री | १.०० |
| ७. अप्पाशास्त्री : साहित्यसमीक्षा | प्रा. अशोक अकलूजकर | २.०० |
| ८. श्रीशिवराज्योदयम् (साहित्य अकादमी पारितोषिकम् १९७५) | डॉ. श्री. भा. वर्णेकर | ४०.०० |
| ९. 'समानमस्तु वो मनः' | डॉ. ग. बा. पळसुले | ३.०० |
| १०. मराठी-संस्कृत-शब्दकोषः | जोशी-परांजपे-गाडगीळ | २५.०० |
| ११. भूपो भिषक्त्वं गतः | पं. ग. पां. लोण्ढेशास्त्री | १.०० |
| १२. विनायक-वीर-गाथा | डॉ. ग. बा. पळसुले | ३.०० |
| १३. आङ्ग्ल-लघु-काव्यानुवादमाला | पं. ल. ज. खरे | २.०० |
| १४. श्रीराजयोगभाष्यम् | डॉ. चि. त्र्यं. केंकरे | ५.०५ |
| १५. मुक्तक-मञ्जूषा | पं. दि. दा. बहुलीकर | २.०० |
| १६. ललित-गीता-लहरी | पं. ओगेटि परीक्षित्शर्मा | १.०० |
| १९. संस्कृत-प्रगति-पथे कः तिष्ठति? | पं. ल. म. चक्रदेव | २.०० |
| २०. शाङ्कर-दिग्विजयः | श्रीविद्यारण्यः | ८.०० |
| २१. शिष्यलेखः (चन्द्रगोमिपादः) | डॉ. प. ल. वैद्य | ५.०० |
| २२. महात्म-चरितम् | पं. पं. ना. पाठक | २.०० |
| २३. स्तोत्र-पञ्चदशी | पं. म. स. आपटीकर | १.०० |
| २४. धन्येयं गायनी कला | डॉ. ग. बा. पळसुले | १.०० |
| २५. विवेकानन्द-चरितम् | डॉ. ग. बा. पळसुले | १०.०० |
| २६. शारदा-प्रसादः | पं. दत्तात्रेयशास्त्री दाणी | २.०० |
| २७. अरविन्दचरितम् | पं. यज्ञेश्वरशास्त्री | ३.०० |